चेतःपूर्वापरभूमिकावस्थायिनि कार्यवर्गे धर्मादिकर्मापि निमित्तकारणतया प्रभवेत् । अतः परं परिकल्पयन्नीति-मार्गातिगोऽवधीरणीय एव स्यादपि । एतावन्मात्रमष्टगुणं चित्तवर्ति धर्मादिवदैश्वर्यं कदाचिदभिव्यक्तं यद्गुणानामेव सहभावि भवद्योगिताव्यपदेशमावहेत् । यत्तु ततोऽधिकं नित्यं कस्यचित्पुरुषविशेषस्य तनुकरणभुवनादिविधौ स-र्गस्थितिप्रलयेषु च कारणतामुपेयात् तत्प्रकृतिस्वभावसद्भा-वमनतिरिक्तमनेकवैचित्र्योपकल्प्यमानपुरुषार्थप्रयोजनम-नादृत्य पृथग्भूतमाश्रीयमाणं भक्तिमात्रसाधनमेव ॥ तदाह

अस्ति चास्य प्रधानस्य
प्रसिद्धस्यान्वयादिना ।
स्वार्थतादिनिषेधेन
साधिता पुरुषार्थता ॥ १९ ॥

तेनास्य भोगसंसिद्धिः
पुरुषस्य यथा यथा ।
तथा तथा परिणतिः
स्यान्न किंचन दुर्घटम् ॥ २० ॥

अत एव प्रधानस्य
महत्त्वपरिणामिनः ।
निमित्तकारणं नान्य-
त्पुरुषार्थोद्यमादृते ॥ २१ ॥

स्वभाव एव चैषोऽस्य
मूलहेतोस्तथेक्षणात् ।
चित्तभूमेरधरतः
शरीरादिविधिं प्रति ॥ २२ ॥
निमित्तकारणं कर्म
स्यादप्याद्यस्वभावतः ।
ततोऽत्र कुत्र व्यापार
ईश्वरस्योपकल्प्यताम् ॥ २३ ॥
चेतस्यष्टगुणे जातु
जातादैश्वर्यतोऽधिकः ।

इति ॥

उक्तनीत्या च चिन्मात्रस्य अधिकविशेषानुपपत्तेः । तथा हि जडतापत्तेरैश्वर्याभावात् धर्मादिवच्चित्तभूमिभागिनोऽस्येश्वरस्य कथमिवाभिव्यक्तचित्तावस्थे मूलकारणे महदादिकार्यपरिणामाय निमित्तकारणत्वमुपकल्प्येत । तदत्र पूर्वत्र परिणामे चेत्पुरुषार्थोचितोत्तरोत्तरविकारकारिणि निमित्तकारणं पुरुषार्थतास्वभावः प्रकृतेस्तत्सकलविशेषपर्यन्तेऽपि विकारराशौ स एवास्तु किमर्धजरतीयन्यायाभिनिवेशेन ॥ तदाह

रह[नत्व]स्य मूलप्रकृता-
वन्तः करणचारिणः ॥ २४ ॥

ईश्वरस्योपकल्प्येत
परिणामनिमित्तता ।

इति ॥

एवं चात्र प्रयोगः—प्रधानं महदादिपरिणामे निमित्तान्तरानपेक्षं पुरुषार्थोपयोगितया भूतविकारपरिणामैकस्वभावत्वात् । यद्यथा परिणामैकस्वभावं तत्तत्र परिणामेऽन्यनिमित्ता[न]पेक्षं ततः स्वभावादेव तथा भवति यथा बीजादिकारणकलापोऽङ्कुरपरिणामे । यच्चान्यानपेक्षं न तथा भवति न तत्तत्र तथास्वभावं यथा शालिबीजं यवाङ्कुरे जलादिरहितं वा बीजम् । तथा च प्रधानं पुरुषार्थोपयोगिमहदादिविकारपरिणामैकस्वभावं न तु शालिबीजं यवाङ्कुर इव । तस्मादन्येश्वरादिनिमित्तकारणानपेक्षं स्वभावादेव महदादिपरिणामवत्प्रधानमिति । अत्र प्रधानं तावत्समन्वयादिहेतुभिः सिद्धमेव । स्वार्थतादिनिषेधेन च पुरुषार्थस्वभावत्वमस्योपपादितम् । दृष्टान्तस्यापि बीजादिकारणकलापस्य न च परं प्रति संदिग्धसाध्यत्वे पक्षकृतत्वमेव । सा च तदङ्कुरकरणस्वभावैव,— इति न तं प्रत्यपि तस्यास्तावत्यास्तथा स्वकार्यकरणेन न्याया[अनन्या]पेक्षस्वभावत्वं संदिग्धमिति ॥ तदाह

यद्यथा परिणामैक-
स्वभावं तत्र तत्ततः ॥ २५ ॥
अनन्यापेक्षि बीजादि-
सामग्री यद्वदङ्कुरे ।

महदादिविकारौघ-
परिणामस्वभावकम् ॥ २६ ॥
त्रिगुणात्म प्रधानं च
तेन सांख्यमनीश्वरम् ।

इति ॥

तत्रैतान्सांख्यान्प्रत्युच्यते,—यथा नावगतो भवद्भिः साधनार्थ इति । यदि हि सर्वविचित्रसंस्थानकार्योत्पादनेषु प्रधानस्यैव या पुरुषभोगार्थता सैव निमित्तकारणं किमीश्वरेणेति उच्यते तत्कुम्भकारेणापि किं घटकरणे । तत्रापि प्राधानिकस्य मृत्पिण्डादेः पुरुषार्थस्वभावतावशादेव तथाभूतसंनिवेशवद्धटकरणसामर्थ्यं स्यात् । नहि पृथुबुध्नोदराकारसंनिवेशं विना भोक्तुरुदकाहरणलभ्यो भोगः सिद्ध्येत् । तृणवारिणाद्यर्थिनां वा कर्मभिरेव? तदाकारवत्ता घटस्य भवेत् किं तत्र कुलालेन । अथ प्रधानस्यायमपि स्वभावविशेष एव, यद्धटसंनिवेशादौ दण्डचक्रवद्बुद्धिमदपेक्षा, तावता प्राधानिकेन कारणकलापेन पुरुषार्थोपयोगितत्संनिवेशवद्धटवस्तुसिद्धेः । तदेवमेव तनुकरणादिकारणस्यापि प्राधानिकात्तथास्वभावयोगात् कथं तथाकरणयोग्यबुद्धिमदपेक्षा नेष्यते । एष हि तावन्न्यायोऽस्ति यदेकत्रैकदा धूमाग्न्योः संबन्धेऽवगतेऽन्यदा अन्यत्र अन्ययोरेव धूमाग्न्योस्तथैव संबन्धोऽवश्यभावी, येन धूमान्तरादृष्टोऽपि अग्निर्निश्चीयते । तदनेनैव न्यायेनैकत्र संनिवेशविशेषे बुद्धिमत्संबन्धप्रतीत्या सर्वत्रैव तथा संनिवेश-

स्य बुद्धिमदविनाभावसिद्धेर्देहादिसंनिवेशादप्यदृष्टस्य तादृशो बुद्धिमतः कथं नानुमतिः ॥ तदाह

पुरुषार्थस्वभावत्वं
समस्तार्थक्रियासु चेत् ॥ २७ ॥
निमित्तकारणत्वेन
प्रधानस्योपकल्प्यते ।
तद्विना कुम्भकारेण
घटोऽपि न भवेत्कथम् ॥ २८ ॥
प्रधानमथमृत्पिण्डा-
देव तादृक्स्वभावतः ।
अथ स्वभाव एषोऽस्य
यत्कुलालाद्यपेक्षणम् ॥ २९ ॥
तथेश्वरव्यपेक्षास्तु
देहहेतोः स्वभावतः ।

इति ॥

न चापि सहकारिणामुपादानकारणस्यान्तः प्रवेशमात्रादुपयोगविशेषानुसंधानवतः कस्यचिदव्यापारेऽपि विचित्रा पुरुषार्थोपयोगिनी रचना उपकल्प्यते । तथाहि यावदिदमितो भवति किंचिदधिकविशेषात्पुनरत एवानेन विशेषेण सविशेषमिदमेव भवति, अपरविशेषयुक्तात्पुनरस्मादेव अन्यदेव अन्यजातीयमेव कार्यं जायते, ततः संप्रति

एवंविधमुपयुज्यते तथैव करोमीत्येवं विचारचतुरा मतिर्न स्यात्, तावत्कथं तथाभूतविशेषकरणाय हानोपादाने स्याताम्। तथा विज्ञत्वे च सर्वदा तथाभूतकार्यसंभवो न भवति, तस्य प्रज्ञावतः सर्वदा तत्करणेच्छाया अभावात्, ततः सापि तस्यापेक्षणीया; इच्छानुसंधानशून्येन तु जलभूम्यादिरसेन उपादानान्तःप्रविष्टेनापि कार्यस्य स्थूलतामात्रमविचित्रमेव स्यात्, न तूपयोगविभागप्रयोजिता अवयवसंस्थानभङ्ग्यः। विलक्षणा दृश्यन्ते एताः सर्वास्तथा। न चाप्येता एकान्तविलक्षणा एव, यावदेकार्थक्रियोपयोगिन्यः, सजातीया अपि प्राज्ञकृततत्तत्सहकारिसंयोजनवियोजनवशादुपलक्ष्यन्ते। बुद्धिशून्यसहकारिमात्रसामर्थ्ये संशयरूपता केवलकार्यस्योचिता; काकतालीयोऽवयवविभाग एकत्रैव सा.................दन्यत्रान्यादृशतैव भवेत्। यत्पुनरनुगामित्वमवश्यमुपयोगविशेषानुगामितानुविधायि सर्वकार्येषूपलभ्यते, तत्तथा नियमेन न स्यात्। तस्मान्मृत्पिण्डायातघटशरावोदञ्चनेष्टकादिसंनिवेशविभागकारी प्रयोजनभेदानुसारितया दृश्यते बुद्धिमत इच्छादिव्यापारः प्रज्ञाविशेषमयो, न तु जडविजातीयतापात्रतया सहकारित्वेन। तथा सति हि स कुम्भकारसंबन्धाद्धट एव वा स्यात् शराव एव वा, न तु कुण्डमपीष्टकान्य[द्य]पि वा। ततो यथाभूतमिच्छति जानाति च कर्तुं तादृगेवात्र कार्यविशेषोद्गमः। अत एव संनिवेशस्य विशेषः पुरुषार्थोपयोगित्वेनार्थनीयत्वात् न तु पृथुबुध्नोदराकारत्वादि, येन 'सिद्धं यादृगधिष्ठातृभाव.......' इत्यादि चोद्येत। इच्छया सह संनिवेशस्यापि हि पुनर्हस्ताद्यपेक्षयानवस्थानात्। ततश्च

तनुकरणभुवनानामन्योन्यानुगुण्यविद एकस्यैव कर्तुस्तथे-
च्छामात्रसंनिवेशाविशेषवत्त्वम् । रथादौ तक्ष्णो यद्यप्ययःसं-
निवेशविज्ञतापि स्यात् तथापि तस्य हस्तादिव्यापारानभ्या-
सादयोयोजनेऽयस्कार एव कर्ता । भिन्नदेशकालगतविव-
र्तितत्वाद्यनुसंधानवतस्तु संहतेच्छामात्रात्कार्यस्य सिद्धौ न
सिद्धा विश्वभागे कर्त्रन्तरापेक्षा, अयस्कार इव हस्ताभ्यासा-
नपेक्षणादित्येक एव तन्वादिविश्वकर्ता पुरुषार्थोपयोगित्वेन।
तच्चार्थिसार्थैरर्थनीयत्वं न घटमात्राश्रयेण, कुण्डपटशकटा-
दिगतत्वेन प्राज्ञशक्तकर्तृकतया च तादृश एवानुमिताधिक्र-
तो न तु घटकुम्भकारमात्रदर्शी, यथा तार्णपार्णचान्दना-
द्यनेकाग्निधूमगतप्रत्यक्षानुपलम्भप्रवृत्तिमानग्निमात्रानुमाने।
अनेकविशेषदर्शने हि सामान्यनिष्ठकार्यकारणभावप्रतिष्ठा-
यां विशेषव्यभिचारः सिद्ध्यति ; एकविशेषव्यभिचाराच्च
सर्वविशेषव्यभिचारनिश्चयेन अत्यन्तादृष्टपूर्वशांशपादिवि-
शेषानिराकरणात् न सर्वविशेषदर्शनमुपयुज्यते । एवमि-
हापि संनिवेशविशेषमात्रस्य तथाभूतचिकीर्षायाश्च अने-
कसंनिवेशदर्शनात् सामान्येन कार्यकारणतासिद्धौ कुला-
लानीश्वरादिविशेषव्याभिचारानिश्चयेऽत्यन्तादृष्टतनुकरणा-
दिचिकीर्षाविशेषानिराकरणेन संनिवेशविशेषात् तथा चि-
कीर्षामात्रानुमानम्; इच्छाकार्येषु अनङ्गभूतेऽप्यनीश्वरत्वे स-
हदर्शनमात्रादपेक्षोपगमेन किंचिदपीच्छाकार्यमुपदेशाद्यमी-
श्वरस्य अनीश्वरस्य वा सिद्ध्येत् ; देहरागादिसहभाव-
दर्शने च रूप्यधात्वादौ इच्छावतां तत्कार्यं न स्यात् । तदे-
वं तनुकरणभुवनानां संस्थानभङ्गीवैचित्र्यं तदनुगुणप्रज्ञा-

महिमानं विना कथं प्राधानिकजडवस्तुस्वभावमात्रादुपयोगविभागनियतमनुगामि चार्थितास्पदमुपपद्येत ॥ तदाह

नैवोपादनहेत्वन्तः-
प्रवेशात्सहकारिभिः ॥ ३० ॥
संनिवेशाविशेषोऽपि
शक्यः कर्तुमिति भ्रमम् ।
लोकयात्रानुसंधान-
वर्ती प्रज्ञां विना नहि ॥ ३१ ॥
तथा चिकीर्षां च विना
विचित्ररचनोद्भवः ।
स्थूलतामात्रमेव स्या-
न्न तु लोकोपयोगिनी ॥ ३२ ॥
रचना नियमेन स्या-
द्विचित्रा जातिरूपिणी ।
कुलालसहकारित्व-
मात्राच्चेज्जायते घटः ॥ ३३ ॥
न स्याज्जातु शरीरादि
दीर्घमृत्पिण्ड एव वा ।
अत एवार्थनीयत्वा-
त्संनिवेशो विशिष्यते ॥ ३४ ॥

न घटादितया सिद्धः
सोऽर्थितापरिपूरकः ।
न चेश्वरोऽनीश्वरो वा
प्रकृतोऽत्राणुलक्षणः ॥ ३५ ॥
वैचित्र्यकारी यो यत्र
स तत्रेश्वर इष्यते ।

इति ॥

न च प्रधानस्यैव मूलकारणस्य व्यवसायादिभिर्व्यक्तिरस्ति तत्कथं तस्येच्छादियोगः पुरुषार्थोद्देशानीतः स्यात् यतः प्रवृत्तिर्भवेत् । यद्यपि च बुद्धेरस्तीच्छानुसंधानं च व्यापारस्तथापि पुरुषसंनिधानाद्यावन्न चेत्यमानः प्रकाशमानोऽसौ संपन्नस्तावन्नेच्छादिरूपतां धत्ते तथालक्षणत्वादिच्छानुसंधानादीनाम् । अन्यथार्थान्तरमेव तत्स्यात् । तथा च सति न बुद्धिप्रवृत्तिरेव पुरुषार्था यावत्पुरुषस्य संवेदनव्यापारोऽपि पुरुषार्थः स्यात् न तु केवलं प्रधानमेव संवेदनमेव च पुरुषस्यार्थः, तस्मात्पुरुषनैरपेक्ष्येण प्रधानबुद्ध्यादिव्यापारस्य पुरुषार्थता न वाच्या, तादृशस्य चेष्टानुसंधानरूपत्वाभावात् न सा युक्ता,—इति युक्तमेव । अथ सर्वपुरुषसाधारणस्य एकस्यापि बुद्धितत्त्वस्य महत्संज्ञकस्य प्रतिपुरुषमध्यवसायलक्षणवृत्तिः सत्यं भिद्यते , महत्कारणास्मिताजन्मनो वा मनःसंज्ञकरणस्य । एषा अध्यवसायादिवृत्तिः प्रत्येकपुरुषनियतास्तु , न तया उत्तरकालभाविन्या प्रधानस्य महतो वा पुरुषार्थानुसंधानेच्छावत्ता युज्यते किं तु प्रधानस्यैव

प्रथमविकारकरण एव सर्वपुरुषोद्देशेन सामान्यानुसंधानेच्छा
व्यवसायादिवृत्तिः प्रथमा बुद्धिसंज्ञा अस्त्येव, येन तस्यापि
बुद्धिपूर्वकारिता स्यात् । तदैव तदपि न युक्तम्, प्रधान्य-
[नस्य]सर्वथैव अव्यक्तरूपत्वेनानुपलक्षणीयवृत्तित्वात् । न च
वृत्तौ पुरुषेणासंविदितायामिच्छानुसंधानादिरूपत्वं संभव-
ति, पुरुषेणापि प्रधानवृत्तेः केन संवेद्यमानता सर्वपुरुषोद्दे-
शेन सामान्यप्रवृत्तेः, एकैकेन चेत् तत्तस्य सर्वज्ञत्वं स्यात्,
पुरुषार्थत्वं च पूर्ववत्सर्वपुरुषोपयोगि स्वकार्यानुसंधानवत्त्वा-
त्, मकाश्यधर्मभूता [ या ]श्च प्रकाशस्थानताया अनन्त-
पुरुषसंनिधानानीतत्वादानन्त्येऽपि आश्रयैक्येन अन्योन्यो-
न्मूलनात्पुरुषबहुत्वासिद्धिः । अथ सामान्यरूपेणैव सर्वज्ञेन
च पुरुषविशेषेण सामान्यप्रधानवृत्तेः संवेद्यमानता तत्स
एवेश्वरोऽस्तु, तस्यैव विश्वनिर्मित्सा संवेद्या सती संबन्धि-
नी भवति,—इति प्रधानवत् तस्यापि निमित्तकारणतायो-
गात्सर्वज्ञत्वात्सर्वकर्तृत्वाच्च ॥ तदाह

न च प्रधानस्येच्छादि-
संभवः पुरुषार्थता ॥ ३६ ॥
यतः स्यादस्य बुद्धेस्तु
संभवन्नप्यसंभवी ।
विना संवेद्यतां पुंस-
स्तथात्वे पुरुषार्थता ॥ ३७ ॥
पुंसोऽपि स्यात्प्रधानस्या-
वाच्या सा केवलस्य तु ।

अथापि मनसो वृत्ति-
बुद्धेर्वैकैकसंस्कृता ॥ ३८ ॥
इच्छा नाम कथं सर्व-
पुरुषार्थोपयोगिनी ।
स्यात्किं तु सा प्रधानस्य
सामान्यस्याखिलान्प्रति ॥ ३९ ॥
पुंसः स्यात्साध्यसंवेद्या
नेच्छा वेद्या च कस्य सा ।
सर्वेषां यदि सार्वज्ञ्य-
मेकैकस्य प्रसज्यते ॥ ४० ॥
संकीर्येरन्प्रकाशैक्या-
द्भिन्नाश्चाभासमानताः ।
अथापि सर्वपुरुषा-
भिन्नेनैकेन केनचित् ॥ ४१ ॥
वेद्या सा वैष तर्ह्येकः
कर्ता ज्ञाता स चेश्वरः ।

इति ॥

अथ न पुरुषस्योपयोगि 'करोमि' इत्येवमनुसंधानवत एव पुरुषार्थत्वं येन प्रधानस्य तदभावान्न स्यात्, अपि तु प्रधानं महद्वा तन्मात्राणि वा यदि वा शुक्रशोणिताद्यपि त-

त्स्वभावत्वादेव तादृक्कार्यमभिनिर्व[र्त]यति, यज्ञातं साद्विचित्रसंनिवेशादिकं परतोऽर्थक्रियाविशेषार्थी प्रमाता दृष्ट्वा स्त्रीपुंसादिवदन्योन्यं योजयति। क्वचित्पुनः कर्मवशाच्च व्याघातकादीनां काकतालीयेन अन्यथा वा संनिपातो भवेत्ततः पुरुषभोगार्थमिव कारणानां प्रवृत्तिरित्युपचारेण पुरुषार्थता उच्यते, तदेतदपि न युक्तं। यत एवं सति वस्तुतो निमित्तकारणाभावात् स्वातन्त्र्येण स्वभावादेव कारणानां तथाविधकार्यविशेषकारितेति दृष्टे प्रकृतिपुरुषान्तरे तमेव पुरुषं प्रत्यपि तेषां कथं कार्यकरणाय प्रवृत्तिर्न भवति। अथ भवत्येव प्रकृत्यैकस्य। ननु एकस्य प्रकृतिपुरुषान्तरज्ञानादेव सा निरुध्यते, सर्वपुरुषसाधनत्वं कस्य[स्याः]प्रकृतेरेकरूपत्वात् अष्टानां प्रकृतीनां, तदस्त्वासां; शुक्रशोणितादेस्तु मुक्ताभिमतं पुरुषं प्रति कस्माद्देहात्मककार्यजननं न भवेत्। अथ तस्यापि तद्भवत्येव किं तु पुरुषस्य कृतार्थत्वात् न तदुत्पन्नमतिसंवेद्यतां याति। तदेतदेवं स्यात्, यदि पुरुषस्य बुद्धिसंवेदनाय स्वरूपातिशयलक्षणः कश्चिदुद्यमः स्यात्, स चेदानीं कृतकार्यत्वात् तस्य निवृत्तः,—इति यावता सर्वदा निरभिप्रायो निरुद्यम एव चैकरूप उदासीनः पुरुषो न तस्यैकदातिशययोगोऽन्यदा तन्निवृत्तिः कूटस्थताहानिप्रसङ्गात्। केवलं बुद्धेः कर्मवशात् प्रतिपुरुषं वृत्तिविशेषोऽन्तःकरणस्य वा नियतो, येन मुक्तपुरुषस्यापरबुद्धिवृत्तिः संवेदनमनुभवति, अन्यथा एकात्मीयाभिमतबुद्धिवृत्तिभोगानिवृत्तेः, ततः पुरुषस्य अर्थित्वानर्थित्वविभागाभावात् नित्यनिर्मुक्तस्वभावस्य अन्तःकरणमात्मकर्मानियतं केवलं बद्धावस्थायां कर्मभिः संवेद्यं भवेत्

मोक्षदशायां तु नोत्पद्यत एव, अन्यथा कर्मणां ताद-
वस्थ्यात् कथं न नियतप्रस्तुतपुरुषसंवेद्यता स्यादेव, न हि
पुरुषाणां कर्म नियामकम् अपि तु अन्तःकरणस्यैव। तदे-
वं स्वकारणस्वातन्त्र्यादेवोत्पन्ने सान्तःकरणे देहे नानार्थि-
त्वात् तस्य पुरुषसंवेद्यता स्यादेव, न भवतीति नोपपन्नं
तस्य संवेद्यस्वभावत्वात्। अथ क्षीणकर्मणोऽन्तःकरणस्य
न संवेद्यतास्वभाव उच्यते, तदत्र किं प्रमाणम्। कर्म[भावा]
भावाभ्यां च तदानीं बन्धमोक्षाभ्युपगमः स्यात्, न सं-
योगवियोगाभ्यां, ततश्च दर्शनक्षतिः। न चापि कर्माणि
करुणयापि दानादीनि ज्ञातपुरुषान्तरस्य विरमन्ति, राग-
द्वेषप्रयुक्तानां कर्मणां बन्धकत्वाभ्युपगमे रागादिभावाभा-
वकृतबन्धमोक्षवादिदर्शनाश्रयणमेव स्यात्,—इति स्वाभा-
विकपुरुषवादे ज्ञातपुरुषविवेकस्यापि बुद्धिसंबन्धपरिहारा-
योगादनिर्मोक्षापत्तिः,—इत्यपरबुद्धिमत्पुरुषप्रेरणयैव सा
मूलकारणस्य संसारोपयोगिसंनिवेशविशेषकरणे प्रवृत्तिरु-
पपन्ना,—इति निरवद्य एव प्राक्तनहेतूपन्यासः॥ तदाह

न लोकयात्राभिप्राया-
जनयेद्बीजमङ्कुरम्॥ ४२॥
किं तु स्वभावात्सा तस्य
सामग्री हेतुरीदृशः।
यज्जातं योग्यमन्योन्यं
योजयेद्बुद्धिमाञ्जनः॥ ४३॥

अस्य तेनोपचारेण
पुरुषार्थत्वमुच्यते ।
इति चेत्तत्समाप्तेऽपि
पुरुषार्थेऽपि तं प्रति ॥ ४४ ॥
स्वकार्यपरिणामान्न
विरमेन्मूलकारणम् ।
आहो न विरमत्येत-
त्परं प्रकृतिसप्तके ॥ ४५ ॥
परिणामात्तदेकं हि
सर्वान्पुंसः प्रतीष्यते ।
तथा[1]पि देहभूतादेः
परिणामः स्वभावतः ॥ ४६ ॥
पूर्ववन्न भवेत्कस्मा-
त्तं मुक्ताभिमतं प्रति ।
अथापि स भवत्येव
किं तु तेन न युज्यते ॥ ४७ ॥
मुक्तपुंसा कृतार्थत्वा-
दनर्थित्वात्स केवलः ।
नैतन्नार्थित्वमस्यास्ति
जातु पुंसोऽथ चेतसः ॥ ४८ ॥

---

१ तयेति पाठान्तरम् ।

अर्थित्वविगमान्न स्या-
भूयः पुंसा समागमः ।
तदेतदपि न न्याय्यं
जाते देहस्थचेतसि ॥ ४६ ॥

संवेद्यैकस्वभावत्वा-
त्तस्य कर्मक्षयान्न चेत् ।
तत्स्वभावत्वमेव स्या-
न्मोक्षः कर्मक्षयाश्रयः ॥ ५० ॥

स्युर्ज्ञातपुंविवेकानां
कर्माण्यपि कृपादितः ।
न रागात्तानि चेदेवं
मोक्षो रागक्षयाद्भवेत् ॥ ५१ ॥

तथा च दर्शनत्याग-
स्तन्न युक्ता स्वभावदृक् ।
तस्मात्प्रसिद्धं तन्वादि
बुद्धिमत्कर्तृपूर्वकम् ॥ ५२ ॥

संस्थानभेदादित्येत-
न्निरवद्यं प्रसाधनम् ॥ ५३ ॥

इति ॥

स एष हेतुः परमेश्वरं प्रति
प्रयुज्यमानः स्वनिवेशितात्मना ।

न हेतुदोषैः परिभूयते मनाक्
परोऽपि वा केवलमेतदुच्यते ॥ ५४ ॥
समुज्ज्वलन्न्यायसहस्रसाधितो-
ऽप्युपैति सिद्धिं न विमूढचेतसाम् ।
महेश्वरः पाणितलस्थितोऽपि सन्
पलायते दैवहतस्य सन्मणिः ॥ ५५ ॥
स्वात्मैवायं स्फुरति सकल-
प्राणिनामीश्वरोऽन्तः
कर्ता ज्ञातापि च यदि परं
प्रत्यभिज्ञास्य साध्या ।
सा चास्माभिर्विहितघटना-
न्यत्र किं त्वीशसिद्धि-
द्वैतेऽप्यस्तीत्युचितमधिकं
भाति वह्निर्निशीथे ॥ ५६ ॥

इति श्रीमन्महामाहेश्वराचार्योत्पलदेवेनोदयाकरसूनुना
विरचिता ईश्वरसिद्धिः समाप्ता ॥

---

श्रीमत्कश्मीरभूभर्तुराज्ञया प्रीतये सताम् ।
मधुसूदनकौलेन संपाद्येयं प्रकाशिता ॥

---

SSU
SSUV

अथ

# संबन्धसिद्धिः

श्रीमदाचार्योत्पलदेवविरचिता ।

---

भेदाभेदात्मसंबन्ध-
सहसर्वार्थसाधिता ।
लोकयात्रा कृतिर्यस्य
स्वेच्छया तं स्तुमः शिवम् ॥ १ ॥

भावभेदादिसंबन्ध-
मयेन वपुषोन्मिषन् ।
जयत्येकोऽपि विश्वात्मा
प्रकाशः परमेश्वरः ॥ २ ॥

इह भावानां संबन्धो विचार्यते,— कस्तावत्संबन्धशब्दार्थः संसर्गः संपर्कः संश्लेषः। संबन्ध इत्यप्युक्ते न विवृतः संबन्धार्थः प्रतीयते । किं नैरन्तर्यं संश्लेष उतान्यत्किंचित् । नैरन्तर्यं चेत् दूरस्थयोः पितापुत्रयोः स न स्यात्, अयःशलाकयोः संनिकृष्टयोर्विशुद्रव्ययोरपि च स्यात् । अथ द्विष्ठः

---

१ ख० भेदात्मेति पाठः ।

पदार्थः कश्चित्संबन्धः। तत्रापि द्विष्ठतैव संबन्धता चेत् तद्वित्वद्विपृथक्त्वादेरपि सा स्यात्। न चायमर्थः संबन्धशब्दस्य अवयवार्थानुरोधादुत्तिष्ठति[1] अपि तु तैलपायिकाशब्दस्येव संकेतमात्रात्। अथ संबन्धशब्दार्थ एव न द्विष्ठता अपि तु सोऽन्य एव केवलं संबद्धयोरेव[2] संभवतीति द्विष्ठ उच्यते, स तर्हि स्वरूपेणैव स्पष्टमुच्यतां संबन्धः संश्लेष इत्यादिपर्यायाणामयमर्थ इति। अपेक्षापारतन्त्र्यादिरपि न चान्यः संबन्धार्थो द्विष्ठत्वन्यायेनैव सोऽर्थाक्षिप्तः स्यात्। न चाप्यर्थाक्षिप्ततास्य, न हि जडयोः संबन्धिनोरपेक्षार्थो घटते पारतन्त्र्यार्थो वा। अथाप्यङ्कुर एव बीजमपेक्षते बीजे वा परतन्त्रो भवति, तदायत्तत्वादेस्तदात्मलाभस्येत्येतदपि न सम्यक्; उपचारो ह्ययमपेक्षत इव परतन्त्र इवेति स्यात्, न तु जडस्य मुख्यैवाकाङ्क्षा प्रार्थना चेच्छैव विशिष्टा अपेक्षा पारतन्त्र्यं वा परप्रवणता परकीयविनियोगाकाङ्क्षा स्वेच्छाचरणनिरोधलक्षणः संकल्पविशेष एव संगच्छते, अलब्धात्मनश्चात्मलाभार्थमपेक्षादि[3] कथ्यते, न च तदानीमद्विष्ठत्वात्संबन्धार्थोपपत्तिः; तस्मान्मुक्तकण्ठमेव मुख्यः संबन्धोऽभिधातव्य इति। तत्रोच्यते संबन्धः संपर्कः संश्लेष इत्येते पर्यायास्तावद्भवन्ति, स च संश्लेषार्थोऽनेकस्यैकता कथ्यते, न त्वनेकतैव नापि एकतैव अपि तु उभयावस्थापेक्षोऽयमर्थः[4] संबन्धः। अत एव न बहूनामेकः संबन्धः। यदि हि अनेकत्वमात्रमेकत्वमात्रं वा संबन्धः

---

१ ख० एतदुत्तिष्ठतीति पाठः। २ ख० पु० सोऽपि द्वयोरिति पाठः।
३ ख० अर्थलाभेति पाठः। ४ ख० पु० पेक्षयेति पाठः।

स्यात् , तद्बहूनामपि एकतापत्तौ एकतानापत्तावपि वा स्यात् , एकमात्रस्यापि च स्यात् । यदा पुनरनेकस्यैकता संबन्ध उभयापेक्षया तदानेकापेक्षणादेकमात्रस्यैव न संबन्धः , एकापेक्षणाच्च नानेकस्यैव पृथक्स्थितस्य । न चापि त्र्यादीनामेकः संबन्धः , त्रयाणां हि भिन्नभेदात्त्वधिकृतद्वैशस्याश्रयात्परस्परं भेदात् , तेषां च संबन्धस्वरूपस्थितावपेक्षणात् , एकस्य द्वितीयेन सह यैकता न सा तृतीयेन सह , तयोर्द्वितीयतृतीययोर्भेदादपेक्षणाच्च ; ततो बहूनां शतादिसंख्यानामपि प्रतियुगलमेवैकः संबन्ध उद्घोष्यते ,— इत्येवं द्वयोरेकात्मेति संबन्धशब्दार्थोऽवयवानुसारेणैव व्यवस्थितः । संशब्देन सहार्थवृत्तिना समानार्थवृत्तिना वा बन्धिना च देशान्तरपरिहारपूर्वकैकदेशावस्थानार्थेन विस्पष्टमुक्तैव स ह्यनेकस्यैकता । केवलमनेकस्य एकता संभवेन्न वेति पर्यालोच्यते,—तत्रायं संबन्धोऽनेकधा प्रतीयते ,—पितुः पुत्रः , राज्ञः पुरुषः , वृक्षस्य शाखा , धवश्च खदिरश्च , नीलमुत्पलं , देवदत्तः काष्ठैः स्थाल्यामोदनं पचति , घटस्याभावः , अस्मादिदमन्यत् ,— इत्येवमादिना रूपेण । तथा विपर्ययेणापि पुत्रस्य पिता , पुरुषस्य राजेति । तत्र किमिदं प्रतीतिमात्रम् उत वस्त्वेव एवंभूतं प्रतीयते । तत्र यदि प्रतीतिमात्रमेतत् वस्तुस्वरूपं तर्हि वक्तव्यम् ।

तत्राचक्षते,— वस्तु घटादि स्वात्ममात्रपरिसमाप्तमन्योन्यव्यावृत्तमित्थमेव हि स्वात्मावभासिना प्रत्यक्षेण प्रतीयते कल्पना कल्पितैव सा । ते हि 'अमिश्राः स्वयं भावास्तान्योजयति कल्पना ' इत्याहुः , तथा नीलमुत्पलमिति शाब्द्या कल्पनया परं नीलोत्पलयोरेकात्मता प्रतीयते ,

न तु वस्त्ववभासिना निरंशोत्पलस्वलक्षणविशेषालम्बनेन[1] प्रत्यक्षेण प्रमाणेन । तथा चाहुः

'संयुज्यन्ते न भिद्यन्ते स्वतोऽर्थाः पारमार्थिकाः ।
रूपमेकमनेकं च तेषु बुद्धेरुपप्लवः ॥' ८

इत्यादि । नच अनेकस्यानेकतासहभाविनी एकता युज्यते भावाभावरूपत्वेन विरुद्धत्वात् । अनेकस्मादुपादानादेकम् एकस्माद्वा अनेकम् अन्योन्यासंसृष्टमेवात्ममात्रपर्यवसितमुद्भवेत् । यथा विज्ञानसन्ततौ व्यवस्था केषांचित् , तत्र हि शब्दस्पर्शादिज्ञानलक्षणेभ्यः समनन्तरप्रत्ययेभ्य एकमैन्द्रियकं विकल्पज्ञानम् । एकस्माद्वा समनन्तरप्रत्ययात् पञ्चापि शब्दादिविषयाणि जायन्ते । या पुनरेकता अनेकता च समानाश्रया सा प्रमाणबाधिता , भावस्य वाभावता ; केवलमित्थंरूपयैव अनया कल्पनाप्रतीत्या सांसारिकव्यवहारनिर्वर्तनार्थमर्थाः परस्परव्यावृत्ता अपि कार्यकारणरूपत्वेन अवास्तवेनैव प्रतिपाद्यन्ते । राजपुरुषयोरन्योन्यं स्वरूपविशेषक्रियैव एवं निरूप्यते[2] स्थाल्यां काष्ठैरित्यादौ च; अत एव प्रतीतिकाल एव सामान्यस्येव संबन्धस्याभ्युपगमः । वस्तुस्वरूपविपरीतत्वेन च प्रतीतिस्तद्वदेव भ्रान्तिविषयैव , केवलं बाधप्रवृत्तावपि उपकार्योपकारकस्वरूपविशेषावभाससंलग्नत्वादस्य भ्रमस्यावयविभ्रमस्येवानिवृत्तिः सर्पभ्रमवत् । तत एव भ्रान्तेरप्यस्याः संवृतिसंज्ञया व्यपदेश इति ।

तत्रोच्यते प्रतीतिस्तावदनेकैकरूपतायां संबन्धाभिधानाय भवद्भिरप्यभ्युपगतैव , येनोक्तम्

---

१ ख० पु० लम्बनप्रत्यक्षेति पाठः । २ ख० पु० निदृश्यते इति पाठः ।

'इत्यमिश्राः[1] स्वयं भावास्तान्योजयति कल्पना ।'

इति । कल्पनारूपत्वं च नास्या दोषः । घटोऽयं पटोऽयमित्यपि विकल्पः कल्पनैव । अथात्र प्रत्यक्षावभासोऽपि तथा घटपटादिरूप एवेति न कल्पनात्वम् । इहापि राज्ञः पुरुषः स्थाल्यामोदन इत्यादावपि प्रत्यक्षावभासो न तथेति कुतोऽवगतम् । अवश्यमेव च प्रत्यक्षावभासोऽप्यत्र तथैवाभ्युपगन्तव्यः, अभ्युपगत एव वा भवद्भिः येनोक्तम् 'अर्थाकारप्रतिभाससंलग्नत्वाद्बाधकेनापि दुरुद्धरोऽयं भ्रमः' इति । न हि अर्थप्रतिभाससंलग्नत्वाद्बाधकेन अपि त्वर्थप्रतिभाससादृश्यसद्भावमात्रात् । रजतभ्रमेऽपि शुक्तिकासादृश्यसद्भावोऽप्यस्त्येव, सादृश्य[3]विषया एव हि सर्वा भ्रान्तयः सादृश्यव्यतिरेकेण चान्या अर्थप्रतिभाससंलग्नतयैव युक्ताः, यदर्थप्रतिभासशरीरमेवंभूतमेव ऐ[4]वंरूपेणैव व्यवहारयित्रा विकल्पेन व्यवहारयितुमुपपन्नम्, अन्यथाभूतीकृते एव अर्थाभासे परस्परस्वरूपाननुप्रविष्टस्वात्ममात्रपर्यवसितार्थनिष्ठतामापादिते यदि परमयं संबन्धविकल्पः सामान्यादिविकल्पवन्निवर्तेत नान्यथा । न च विकल्पोऽर्थप्रतिभासाद्भिन्नः, निर्विकल्पत्वदूषणादीश्वरप्रत्यभिज्ञायाम् । एवं 'राज्ञः पुरुष' इत्यादाववभास एवानेकस्यैकात्मताप्रथारूपोऽभ्युपगन्तव्यः स्थूलप्रतिभासवत्, स तूपपद्यते न वेत्ये[5]तावद्विचार्यते,— तत्र चिन्मात्ररूपस्यैव पारमार्थिकस्य वस्तुनो विश्वात्मता । तस्यैव चिन्मात्रस्य मायाशक्तिप्रभावादभेदाख्यात्युत्थापनेन विश्वस्य तत्त्वभूतभुवनाद्यात्मवैचित्र्येणा-

१ ख० पु० इत्यसिद्धा इति पाठः । २ ख० पु० आभास इति पाठः । ३ ख०पु० सदृशेति पाठः । ४ ख० पु० एकेति पाठः । ५ ख० पु० वेद्यतेति पाठः ।

न्योन्यविभक्तता,—इतीश्वरप्रत्यभिज्ञायां विस्तरेण प्रतिपादितम्,—इति तत एव परीक्ष्यं नेहोपन्यस्यते। अस्मिंश्चार्थे सिद्धे नैकैकतारूपः संसार एव संबन्धशब्दार्थानुप्रविष्टः,—इति नास्त्येवात्र दीनता, केवलमियद्विमृश्यते—यदेकचिन्मात्ररूपत्वेनानेकात्मनो वस्तुभेदस्यैक एव संबन्धः स्यात् य एव राजपुरुषयोः स एव पितापुत्रयोः स्थाल्यादीनां चेति, अनेकश्चेष्यते। तदत्राप्युच्यते—स्यादेक एव सर्वेषामिति। यद्येकतामात्रमेव संबन्धः स्यात्, यावतानेकतांशादंशेनैकता संबन्धः। ततश्च राजपुरुषोपरक्तैकतान्यः संबन्धः पितापुत्रोपरागोपलक्षणविलक्षण एव; अत एव मायादशायामेवाख्यातिभेदप्रधानायां संबन्धपदार्थसद्भावः, विश्वात्मतायां पुनः पूर्णैकतैव न तु संबन्धार्थः कश्चित्। तत्रापि कदाचित्परापरदशायामपरभागापेक्षणाद्गौणवृत्त्या संबन्धार्थः संभवेत्, उपकार्योपकारकयोरेव च विशिष्टयोः संबन्धः विशिष्टरूपः, स च प्रतिपादनीयोऽवश्यमेव, तदप्रतिपादने तयोरुपकार्योपकारकयोः क्रमिकयोर्यौगपद्येन प्रतीतिर्हानोपादानार्थमन्यथा न घटेत, ततश्च व्यवहारलोपः स्यात्। न चोपकार्योपकारकयोरपि स्वाधीनः कश्चिदुपकारार्थः,—इत्यपीश्वरप्रत्यभिज्ञायामेव विस्तारितम्। ततश्च चिन्मयेश्वरेच्छैव सा तादृशी यया[1] पदार्थौ तौ तथोपकार्योपकारकौ भवत इति तल्लग्नयोरेव तयोर्द्वयोर्द्वयोरर्थयोः क्रमिकयोरपि एकबुद्ध्युपारूढयोरेकपरामर्शात् तयोरेवान्यरूपयोर्यौगपद्येन प्रकाशनं व्यवहारसिद्धये तदिच्छयैव विधीयते,—इति न काचि-

१ ख० पु० यथेति पाठः।

खण्डना । स च संबन्धो द्वयोरेव भवति न बहूनां, ब-
हूनां हि किमेकैकस्यान्यैरनेकसंख्यैर्युगपदेव किं वा बहूनां
मध्ये एकस्य एकैकेन । तत्र यद्येकैकस्यानेकसंख्यैस्तत्किं ते-
ऽनेकसंख्या एव एकपरामर्शगोचराः अथानेकपरामर्श-
विषया राज्ञः पुरुषः राज्ञो हस्त्यश्वरथपदातय इति । द्व-
न्द्वेऽपि हस्त्याद्यनेकत्वेऽपि परामर्शस्यैक्यात् द्वन्द्वाख्यः
शब्द एव, हस्त्यादिशब्दा वर्णतुल्याः । एकपरामर्श-
स्थितो हि शब्द एको भवति । तदेकशब्दाध्यासादर्थो-
ऽप्येक एव । अत एव वस्तुशब्दबुद्धय एता,—इति द्वन्द्वा-
र्थस्यैकस्य स्त्रीलिङ्गत्वात् तद्विशेषो नोपात्त एव । एतच्छ-
ब्दः स्त्रीलिङ्ग एव भवति, न तु 'एता' इत्येकशेषनिर्देशो-
ऽयं येन नपुंसकैकशेषः स्यात् । बहुवचनं चात्र दारा इ-
तिवदवयवाद्यपेक्षया,—इत्येवमत्र द्वयोरेव संबन्धः । इह तु
राज्ञो हस्ती चाश्वश्च रथश्च पदातिश्च,—इत्यनेकपरामर्शविषय-
त्वेऽपि यावन्तो हस्त्यादीनां परामर्शास्तावन्त एव राज्ञः,—
इति तत्समुच्चयार्था एव चशब्दाः । अन्यथा चशब्द-
स्याभावे राज्ञ इत्यनुकर्षणं विना हस्तीत्यनेन सहैकपराम-
र्शनिमज्जनैकीभूते राज्ञि परतन्त्रे पुनर्विवेकमनापाद्यमाने के-
न सहाश्वादीनां संबन्धः स्यात् ततश्चोपचारेण हस्त्यादी-
नां सामानाधिकरण्यं प्रतीयते । अथवा सामर्थ्याच्चशब्दा-
भावेऽपि समुच्चयप्रतीतौ एकैकं स एव संबन्धो हस्त्यादीना-
मन्योन्यमपि च सत्ताक्रियां प्रति समुच्चीयमानतासंबन्धश्चश-
ब्देनावद्योत्यते । अर्थप्रतिभासोऽपि चायमित्थं स्थितोऽयम-

१ क० पु० विषया एकपरामर्शविषया इत्यधिकः ।
२ ख० पु० नन्विति पाठः । ३ ख० पु० अथ चासेति पाठः ।

न्यथेति नापरामृष्टो व्यवस्थापयितुं शक्यते परामर्शवि-
रहितस्य प्रतिभासस्यासंभवादेव । न हि मार्गगतिप्रवृत्त-
स्यापि पार्श्ववर्तितृणादिवस्तुस्पर्शरूपादिप्रतिभासाः परा-
मर्शरहिताः सत्त्वेनाभ्युपगन्तुं पार्यन्ते स्मर्यमाणत्वाभावात् ।
नापि तेषां तदा चक्षुरादिकारणसामग्रीसद्भावेनानुमान-
सिद्धा सत्ता युज्यते मनोवधानाभावात् । तद्भावेऽवश्यंभा-
वी तदानीं तृणादिपरामर्श इदानीं च स्मरणम् । एतच्च
प्रत्यभिज्ञायां निर्णीतम् । एवं च विमर्शमय एवार्थप्रतिभा-
स उपपन्नः । विमर्शश्च यथाग्निर्धूमे इति भवति , तथा सं-
स्कृतस्य प्रमातुरस्य धूमस्याग्निः कारणमस्य धूमः कार्य-
मित्यपि भवति , — इत्येवमेकात्मतापत्तिपर्यन्तोऽवभासन-
व्यापारोऽर्थेषु ज्ञानानां, न तु परस्परासंलग्नता प्रकाशमा-
त्रात्परिसमाप्यते । परस्परविशेषणविशेष्यभावपरामर्श ए-
वानेकैकतारूपसंबन्धपरामर्शः । एकपरामर्शव्यापाराविष्ट
एव सांसारिकव्यवहारेषु मायीयः प्रमाता न तदानीमेव
परामर्शान्तरस्पर्शमप्यर्हति चिदैक्याख्यातिभेदनिबन्धनवि-
कल्पनपरामर्शात्मकत्वान्मायाप्रमातृणामित्येतदपि ईश्वरप्र-
त्यभिज्ञायामेव प्रपञ्चितम् । व्यवहारे राजा पुरुषो वा प्रा-
धान्येन जिज्ञासितः प्रतिपिपादयिषितश्च भवेदिति स एव
विशेष्य उच्यते परश्च विशेषणमित्यत्रापि न काचित्क्ष-
तिः । द्वयोश्चैक्येऽपि विशेषणं विशेष्यीकृतस्वरूपं विशे-
ष्यात्मना चकास्ति स्वरूपेणापि चावभाति 'राज्ञः पुरुष'
इति । 'राजपुरुष' इति तु विशेषणभूतो राजा सर्वथा
परिहारितस्वरूपो विशेष्यात्मतामेवैकान्तेनापन्नः प्रथते,—

इति न तत्र संबन्धवाचोयुक्तिः। नीलमुत्पलमित्यत्रापि उ-
त्पलान्तःप्रविष्टं नीलमिति नीलवदुत्पलं प्रधानम्। स्था-
ल्यां काष्ठैरित्यत्रापि कर्त्राश्रितां क्रियामुपलीनाः स्था-
ल्यादयः प्रकाशन्ते। 'घटस्याभाव' इत्यत्रापि अभावो
विकल्पबुद्धावन्तर्नीतघटः प्राधान्येनावभाति। 'अयम-
स्मादन्य' इत्यन्यार्थोऽन्यत्वापरित्यागेनैवान्तर्नीतापरान्या-
र्थो विशेष्य इति। एवं सर्वत्रानुमन्तव्यम्। क्रियाकारक-
संबन्धे तात्कालिकोपकार्योपकारकभावमयसंबन्धाभासः,
शेषसंबन्धे तु स्मर्यमाणोपकारमयः स्मरणावस्थायामपि
च पूर्वदृष्टार्थावभास एव परामर्शैक्यादित्युक्तम्। न केवलं
च संबन्धमयैकतास्पर्शिपरिमितमायामातृपर्यवसायी वस्तु-
प्रकाशनव्यापारो, यावदनन्तचिन्मयशिवतावभासविश्रा-
न्तैव प्रतिक्षणं वस्तुसंवित्क्रिया। न च संविदः क्रमोऽ-
स्ति एकैवैकत्रैव क्षणेऽर्थप्रकाशना, सैव संबन्धशिवता-
मयमेव स्वरूपमाविष्करोति,—इत्युच्यते। तथा चाचार्यध-
र्मकीर्तिः—

'बहिर्मुखं च तज्ज्ञानं भात्यर्थप्रतिभासवत्[2]।
बुद्धेश्च ग्राहिका बुद्धिर्नित्यमन्तर्मुखात्मनि॥' ८

इति। अन्तर्मुखेति, आत्मनीति च स्वसंवेदनमर्थाभासशू-
न्यमपृथग्भूतं चोक्तम्। तथा प्रत्यभिज्ञायामुक्तं—

'या चैषा प्रतिभानन्तपदार्थक्रमरूषिता।
अक्रमानन्तचिद्रूपः प्रमाता स महेश्वरः॥' (ई० प्र० १।७।१)

इत्येतत्तत्रैव वितत्य प्रदर्शितम्। यदप्युक्तं 'प्रतीतिकाल

१ ख० पु० संभिन्न इति पाठः। २ ख० पु० भावार्थेति पाठः।

एव सामान्यस्यैव संबन्धस्याभ्युपगम' इति, तन्न केवलमस्य यावत्सर्वस्यैवार्थस्य बोधबहिर्भूतस्य कस्यचिदभावात्। सामान्यं चैकमनेकमयं बहिरपि पृथगेव सामान्यनिकुरम्बरूपेभ्यः स्वलक्षणेभ्यः। तच्चैकेनैव शब्देनानियतस्वलक्षणाश्रयत्वेन प्रतिपाद्यते, तच्च कल्पितस्वलक्षणसंबन्धमेकशब्दप्रतिपाद्यमेव गौरिति। अत एव समवायाख्यः संबन्ध उच्यते। सामानाधिकरण्येऽपि द्वयोरेकनिष्ठता। तत्र चैकं तद्वस्तु अस्तिवाक्यप्रतिपाद्यं नीलमुत्पलमिति। संबन्धः पुनर्द्वयोर्विशेष्यैक्यता न त्वेवं वस्त्वन्तरं प्रकाशते,– इत्ययं विशेषः। सामानाधिकरण्येऽपि वा नीलमुत्पलमिति विशेष्योत्पलनिष्ठतैवेति संबन्धतैव। सामान्याक्रान्तिविषयः संबन्धः,– इत्यपि यदुक्तं तदप्यत्यल्पमुक्तम्। विश्वमपीदं चिदभेदाख्यातिमयभ्रान्तिपदमेव। भ्रान्तावपि चास्यां पुनः स्वप्नद्विचन्द्रादिवत्क्रान्तता नास्ति संवादादिति सर्वमेतन्निर्णीतं टीकायाम्। तदेवं पूर्णचित्स्वरूपपर्यालोचनाक्षमास्तावन्मात्राभिनिवेशेन संबन्धपदार्थप्रत्याख्यानकारिणोऽसंबद्धाभिधायिन इति। [ तदाह ]

अपेक्षा पारतन्त्र्यं च
न संबन्धो जडात्मनोः।
असंभवादात्मलाभेऽ-
प्युपचारो न लक्षणा[1]॥ १

असतामात्मलाभोक्ते-
र्द्विष्ठतैवं च हीयते।

१ ख॰ पु॰ लक्षणः इति पाठः।

रूपसंश्लेष एवैवं
संबन्धार्थः स्थितः स च ॥ २ ॥
नानन्तर्यमसंबन्धा-
त्तथात्वेऽयःशलाकयोः ।
तेनानेकस्य रूपस्य
श्लेष ऐकात्म्यमेव सः ॥ ३ ॥
नैकस्यैक्येऽप्यनेकस्य
बाध आहुर्यथा परे ।
इत्यमिश्राः स्वयं भावा-
स्तान्योजयति कल्पना ॥ ४ ॥
यतो न कल्पनामात्रं
तावदेतदवारणात् ।
सर्पभ्रान्तेरिवाभास-
लग्नत्वात्तन्निवारणम् ॥ ५ ॥
यस्मादाभासलग्नत्वं
नाभाससदृशार्थता ।
किं त्वाभासानुसारित्वं
भ्रान्त आभास एव तत् ॥ ६ ॥
इत्थमाभास एवास्मि-
न्ननेकस्यैकतादृशि ।

वाच्योपपत्तिः साप्युक्ता
प्रत्यभिज्ञानये स्फुटम् ॥ ७ ॥
एवं च सति वस्तूनां
चिन्मात्रवपुषां सताम् ।
मायानिर्मितभेदाना-
मप्येकत्वमदुर्घटम् ॥ ८ ॥
तत्रापि यः परामर्श-
विषयो लौकिकस्य सः ।
चिद्भेदप्रथारूप-
भेदसारस्य वेदितुः ॥ ९ ॥
व्यापारोऽनेन रुद्धोऽसौ
न विकल्पान्तरं स्पृशेत् ।
विकल्पान्तरसंस्पर्शे
मातृभेदप्रसङ्गतः ॥ १० ॥
तदेकामर्शवर्त्येक-
शब्दाध्यासवशाद्व्रजेत् ।
अनेकोऽप्येकतामर्थो
यथा घटपटाविति ॥ ११ ॥

इत्यस्ति तावदन्यश्च
  विशेषणविशेष्ययोः ।
संबन्ध उपकारार्थः
  स ज्ञातुमुपयुज्यते ॥ १२ ॥
बहुत्वेऽपि भवेद्द्वित्वं
  विशेषणविशेष्ययोः ।
द्विविमर्शभुवो यद्व-
  द्राज्ञोऽश्वरथपत्तयः ॥ १३ ॥
विमर्शो राज्ञ इत्येकः
  स्वसामान्योन्मुखः परः ।
स्वामिसामान्यसंबन्ध-
  सहः पुरुष इत्ययम् ॥ १४ ॥
राज्ञः पुरुष इत्येष
  पश्चात्संबन्धगोचरः ।
कल्प्योऽनेनाथ वा कल्प्यौ
  पूर्वौ ते सर्वथा त्रयः ॥ १५ ॥
षष्ठ्यादिवाच्यः संबन्धो
  विनिविष्टो विशेषणे ।
विशेष्यैकत्वमापन्ने
  स्वं च रूपमनुज्झति ॥ १६ ॥

एकहान्या प्रधानेन
शुद्धेनान्यान्ययोगिता ।
स्याद्गुणस्य यथा राज्ञः
पुरुषो ब्राह्मणस्य च ॥ १७ ॥

तथान्येन प्रधानेन
यैकतान्यापरेण वा ।
संबन्धाख्या गुणस्य स्या-
द्राज्ञोऽश्वः पुरुषो यथा ॥ १८ ॥

इति संबन्धगत्युक्ता
मायीयज्ञातृनिष्ठिताः ।
धियो विभिन्नार्थदृशो
व्यवहारप्रवर्तिकाः ॥ १९ ॥

न परं तास्तथा भ्रान्ताः
सर्वा अपि प्रतिक्षणात् ।
स्वसंवित्संज्ञकानन्त-
चिद्विमर्शप्रतिष्ठिताः ॥ २० ॥

उक्तः स्वसंवित्सिद्धोऽयं
निर्बाध उपयोगवान् ।
संबन्धः प्रत्यभिज्ञायां
पूर्णः परिकरः पुनः ॥ २१ ॥

इति श्रीमदुदयाकरपुत्रोत्पलदेवाचार्यविरचिता
संबन्धसिद्धिः समाप्ता ॥

श्रीमत्कश्मीरभूभर्तुराज्ञया प्रीतये सताम् ।
मधुसूदनकौलेन संपाद्येयं प्रकाशिता ॥

—:=*=:—

# THE

# ISWARAPRATYABHIJNAKARIKAVRITTI

by

**RAJANAKA UTPALA DEVA**

---

# ईश्वरप्रत्यभिज्ञाकारिकावृत्तिः

श्रीराजानकोत्पलदेवकृता

---





Printed by P. Vishi Nath and Sons, Photographers and Proprietors
Kashmir Pratap Steam Press, Srinagar.

---

SRINAGAR

1921

अथ

# प्रत्यभिज्ञाकारिकाः

श्रीमदुत्पलदेवविरचिताः

स्वकृतवृत्त्या समलंकृताः ।

प्रथमो ज्ञानाधिकारः ।

कथंचिदासाद्य महेश्वरस्य
दास्यं जनस्याप्युपकारमिच्छन् ।
समस्तसम्पत्समवाप्तिहेतुं
तत्प्रत्यभिज्ञामुपपादयामि ॥ १ ॥

परमेश्वरप्रसादादेव लब्धात्यन्तदुर्लभतद्दास्यलक्ष्मीरहमेकाकिसम्पदा लज्जमानो जनसमीपमखिलं स्वस्वामिनं वक्ष्यमाणोपायेन प्रत्यभिज्ञापयामि येन तस्यापि परमार्थलाभेन परितुष्येयम् ॥ १ ॥

कर्तरि ज्ञातरि स्वात्मन्यादिसिद्धे महेश्वरे ।

अजडात्मा निषेधं वा
सिद्धिं वा विदधीत कः ॥ २ ॥

सर्वेषां स्वात्मनः सर्वार्थसिद्धिसमाश्रयस्य तत्तत्साधनान्यथानुपपत्त्या क्रोडीकृतसिद्धेः स्वप्रकाशस्य प्रमात्रेकवपुषः पूर्वसिद्धस्य पुराणस्य ज्ञानं क्रिया च स्वसंवेदनासिद्धमेवैश्वर्यं, तेनेश्वरस्य सिद्धौ निराकरणे च जडानामेवोद्यमः ॥ २ ॥

किंतु मोहवशादस्मि-
न्दृष्टेऽप्यनुपलक्षिते ।
शक्त्याविष्करणेनेयं
प्रत्यभिज्ञोपदर्श्यते ॥ ३ ॥

केवलमस्य स्वसंवेदनसिद्धस्येश्वरस्य मायाव्यामोहादहृदयङ्गमत्वादसाधारणप्रभावाभिज्ञापनख्यापनेन दृढनिश्चयरूपं प्रत्यभिज्ञानमात्रमुपदर्श्यते ॥ ३ ॥

तथाहि जडभूतानां
प्रतिष्ठा जीवदाश्रया ।
ज्ञानं क्रिया च भूतानां
जीवतां जीवनं मतम् ॥ ४ ॥

वस्तूनां जडाजडभेदेन द्वैविध्यम्, तत्र जडस्वरूपस्य जीवन्निष्ठा सिद्धिः ; जीवतां पुनर्जीवनं जीवत्त्वं ज्ञान-

क्रिये एव ॥ ४ ॥

तत्र ज्ञानं स्वतः सिद्धं,
क्रिया कायाश्रिता सती ।
परैरप्युपलक्ष्येत
तयान्यज्ञानमूह्यते ॥ ५ ॥(२१५)

तत्रापि प्रत्यक्षाज्ज्ञानमात्मसंवेद्यं परत्रापि क्रिययैव प्रसिद्ध्यतीति सिद्ध एव स्वसंवेदनसिद्धतया स्वपरयोरीश्वरोऽहंप्रत्यय आत्मा । तस्य मायाशक्त्या निसर्गतिरोधानादेव विमतिः ॥ ५ ॥

अथ द्वितीयो विमर्शः

ननु स्वलक्षणाभासं
ज्ञानमेकं, परं पुनः ।
साभिलापं विकल्पाख्यं
बहुधा, नापि तद्द्वयम् ॥ ६ ॥(२१९)

नित्यस्य कस्यचिद्द्रष्टु-
स्तस्यात्रानवभासतः ।
अहंप्रतीतिरप्येषा
शरीराद्यवसायिनी ॥ ७ ॥ (२१२)

ज्ञानमेकं स्फुटावभासस्वलक्षणानुभवरूपं निर्विकल्पकं ते कथयन्ति । अपरं तु शब्दारूषणया स्मृतिसंशयोत्प्रेक्षादिबहुभेदं विकल्पसंज्ञम् । उभयमप्येतन्न युज्यते वो-

धरूपज्ञानातिरिक्तस्यान्यस्य संबन्धितया तस्यानुपलब्धेः कोऽसौ स्थिर आत्मा । साभिलापाहंप्रत्ययेनापि शरीरादिकवेद्यवस्तूत्तीर्णो वेदयिता न कश्चिल्लोकैरवधार्यते ॥ ७ ॥

अथानुभवविध्वंसे
स्मृतिस्तदनुरोधिनी ।
कथं भवेन्न नित्यः स्या-
दात्मा यद्यनुभावकः ॥ ८ ॥

स्मृतिकाले पूर्वानुभवनाशात्कथं पूर्वानुभवावष्टम्भधर्मा स्मृतिर्जायेत यदि तदापि तदनुभवबोधो नावर्तेत, यश्चानेककालस्थायी बोधः स एवात्मानुभविता ॥ ८ ॥

सत्यप्यात्मनि दृङ्नाशा-
त्तद्द्वारा दृष्टवस्तुषु ।
स्मृतिः केनाथ यत्रैवा-
नुभवस्तत्पदैव सा ॥ ९ ॥

अर्थाभासनाशात्तन्मुखालम्बनीयोऽप्यर्थो नास्ति स्मृतेरित्येकबोधात्मनि सत्यप्यात्मनि सा निर्विषयैवेति व्यवहारोच्छेदः । असतोऽर्थानुभवस्य विषयेण सा विषयवती यदि ॥ ९ ॥

यतो हि पूर्वानुभव-
संस्कारात्स्मृतिसम्भवः ।

यद्येवमन्तर्गडुना
कोऽर्थः स्यात्स्थायिनात्मना ॥ १० ॥ (२१५)

अनुभवात्संस्कारः संस्काराच्च स्मृतिर्जायमाना तं पूर्वानुभवमनुकुर्वत्यवगाहितविषयं तमनुभवमवभासयति, एवमात्मस्थैर्येण किमनुपयोगिना, संस्कारस्यात्मवादेऽप्यङ्गीकरणात्तेनैव च सिद्धेः ॥ १० ॥

ततो भिन्नेषु धर्मेषु
तत्स्वरूपाविशेषतः ।
संस्कारात्स्मृतिसिद्धौ स्या-
त्स्मर्ता द्रष्टेव कल्पितः ॥ ११ ॥ (२१६)

सुखदुःखज्ञानादिभिन्नधर्माश्रयत्वेनाप्यात्मनो नोपयोगो भिन्नैरसंभिन्नस्यानुपजातविशेषस्य स्मृतावव्यापृतेः । तद्द्रष्टृवत्कल्पनामात्रमेतदात्मा स्मर्तेति ॥ ११ ॥

ज्ञानं च चित्स्वरूपं चे-
त्तदनित्यं किमात्मवत् ।
अथापि जडमेतस्य
कथमर्थप्रकाशता ॥ १२ ॥ (२१७)

चित्स्वाभाव्ये ज्ञानस्य चेत्यधर्मदेशकालावेशायोगादात्मन इव नित्यतादिप्रसङ्गः । जडत्वे कथमर्थस्यासौ प्रकाशः ॥ १२ ॥

अथार्थस्य यथा रूपं
धत्ते बुद्धिस्तथात्मनः ।
चैतन्यमजडा सैवं
जाड्ये नार्थप्रकाशता ॥ १३ ॥(२१८)

ज्ञानं बुद्धिः सा जडापि यथा विषयरूपच्छायां धत्ते तथात्मनोऽपि चैतन्यच्छायामतोऽसावर्थप्रकाशः, तथा च तस्याश्चित्स्वरूपता स्यात् । एवं ज्ञानं सदपि नान्यसंबन्धितयानुपपत्तेः । क्रिया तु स्वरूपेणास्ति नान्यसंबन्धितया ॥ १३ ॥

क्रियाप्यर्थस्य कायादे-
स्तत्तद्देशादिजातता ।
नान्याऽदृष्टेर्न साप्येका
क्रमिकैकस्य चोचिता ॥ १४ ॥(२१९)

क्रियापि पूर्वापरीभूतावयवैका कारकव्यापाररूपा युक्ता क्रमिकस्यानेककालस्पृशः स्वात्मैक्यायोगात् ; नापि कालक्रमव्यापी चैकस्वभावश्च तस्या आश्रयो युक्तः, केवलं गमनपरिणामादिरूपा सा क्रिया ; कायादीनां तु तत्तद्भिन्नदेशकालगतापूर्वसत्तामात्रमेतदतिरिक्तस्यान्यस्यानुपलम्भात् ॥ १४ ॥

तत्र तत्र स्थिते तत्त-
द्भवतीत्येव दृश्यते ।

नान्यन्नान्योऽस्ति संबन्धः
कार्यकारणभावतः ॥ १५ ॥

पूर्वस्मिन्सति परस्य सत्त्वेत्येतावन्मात्रेऽनुभवः, क्रियावच्च न क्रियाकारकादिसंबन्धः कश्चिद्भिन्नस्यास्यानुपलम्भात् कार्यकारणभावादृते नान्यद्वस्तूनां ज्ञातेयम् ॥ १५ ॥

द्विष्ठस्यानेकरूपत्वा-
त्सिद्धस्यान्यानपेक्षणात् ।
पारतन्त्र्याद्ययोगाच्च
तेन कर्तापि कल्पितः ॥ १६ ॥

संबन्धो द्विष्ठो, न चैकेनात्मनोभयत्र स्थितिर्युक्ता; न च द्वयोः सिद्धयोरन्योन्यापेक्षा, नापि स्वात्ममात्रनिष्ठयोः पारतन्त्र्यरूपः संबन्धः । ततो यथा ज्ञातृत्वं कल्पितं तथा कर्तृत्वमपीति कथमात्मा सर्वेश्वर इति ॥ १६ ॥

सत्यं किंतु स्मृतिज्ञानं
पूर्वानुभवसंस्कृतेः ।
जातमप्यात्मनिष्ठं त-
न्नाद्यानुभववेदकम् ॥ १७ ॥

पूर्वानुभवसंस्कारप्रबोधजापि स्मृतिरात्ममात्रनिष्ठत्वा-त्स्वरूपसंवेदिकैव न तु पूर्वानुभवावेशाभावात्पूर्वानुभूता-र्थव्यवस्थापिका घटते ॥ १७ ॥

दृक्स्वाभासैव नान्येन
वेद्या रूपदृशेव दृक् ।
रसे संस्कारजत्वं तु
तत्तुल्यत्वं न तद्गतिः ॥ १८ ॥ (२।२)

सर्वा हि ज्ञप्तिः स्वसंवेदनैकरूपा नान्यसंवित्संवेद्या रूपरसज्ञानयोरन्योन्यसंवेदनेऽन्योन्यविषयवेदनमपि स्या-त्ततश्चेन्द्रियनियमाभावः, पूर्वानुभवसंस्कारजत्वेन तत्सा-दृश्यमात्रं न तु पूर्वानुभवावगतिः, तदभावात्तत्साद-श्यमपि नावसेयम् ॥ १८ ॥

अथातद्विषयत्वेऽपि
स्मृतेस्तदवसायतः ।
दृष्टालम्बनता भ्रान्त्या
तदेतदसमञ्जसम् ॥ १९ ॥ (२।३)

न चापि भ्रान्त्या पूर्वानुभवं तद्विषयं शुक्तौ रजत-मिवासंवेद्यमानमध्यवस्यतीति स्मृतिस्तद्विषया ॥ १९ ॥

---

१ ख० ग० पु० जन्मेति पाठः ।

स्मृतितैव कथं ताव-
द्भ्रान्तेश्चार्थस्थितिः कथम् ।
पूर्वानुभवसंस्कारा-
पेक्षा च किमितीष्यते ॥ २० ॥ (३।४)

पूर्वानुभवाप्रकाशात्तद्विषयसंप्रमोषेऽध्यवसायमात्रात्स्मृतित्वं न युक्तम् । न च भ्रान्त्या पूर्वानुभूतार्थव्यवस्थापनं, पूर्वानुभवास्पर्शे च तद्भिन्नयोगक्षेमाया भ्रान्तेः संस्कारजत्वे को ग्रहः ॥ २० ॥

भ्रान्तित्वे चावसायस्य
न जडाद्विषयस्थितिः ।
ततो जाड्ये निजोल्लेख-
निष्ठान्नार्थस्थितिस्ततः ॥ २१ ॥ (३।५)

अध्यवसाय एव भ्रान्त्या विषयव्यवस्थापको न तु संवित्[2], स च जडः कथमर्थव्यवस्थाया हेतुः । चिद्रूपोऽप्यतीतार्थमाभासयेत् अबाह्यस्वात्मोल्लेखमात्रप्रकाशो वा न[3] तद्धेतुः ॥ २१ ॥

एवमन्योन्यभिन्नाना-
मपरस्परवेदिनाम् ।

---

१ क० पु० हेतुरिति पाठः । ग० पु० भ्रम इति पाठः ।
२ क० ग० पु० स्वसंविदिति पाठः । ३ क० पु० नत्विति पाठः ।

ज्ञानानामनुसंधान-
जन्मा नश्येज्जनस्थितिः ॥ २२ ॥

ज्ञानानि स्वात्ममात्रपरिनिष्ठितानि स्वसंविद्रूपतया ना-
परसंवेद्यानि तेषामन्योन्यविषयसंघटनामयः परमार्थोप-
देशपर्यन्तो लोकव्यवहारः कथम् ॥ २२ ॥

न चेदन्तःकृतानन्त-
विश्वरूपो महेश्वरः ।
स्यादेकश्चिद्वपुर्ज्ञान-
स्मृत्यपोहनशक्तिमान् ॥ २३ ॥

चित्तत्त्वमेव विश्वरूपमतोऽतिरिक्तस्यानुपपत्तेः । अ-
शेषपदार्थज्ञानानामन्योन्यानुसंधानमस्यैव ज्ञानादिकाः श-
क्तयः ।

'मत्तः स्मृतिर्ज्ञानमपोहनं च' (भ० गी० १५ । १५)

इति ह्युक्तम् ॥ २३ ॥

स हि पूर्वानुभूतार्थो-
पलब्धा परतोऽपि सन् ।
विमृशन्स इति स्वैरी
स्मरतीत्यपदिश्यते ॥ २४ ॥

पश्चादपि पूर्वानुभूतार्थानुभवितृतया पूर्वानुभूतार्थप्र-

१ ख० ग० पु० त्वादिति पाठः ।

काशासंप्रमोषणं तस्यैकस्य विभोः कर्तुः स इत्यत्र पूर्वानुभूतत्वेन प्रत्यवमर्शः स्मृतिर्नाम [1]व्यापारः ॥ २४ ॥

भासयेच्च स्वकालेऽर्था-
त्पूर्वाभासितमामृशन् ।
स्वलक्षणं घटाभास-
मात्रेणाथाखिलात्मना ॥ २५ ॥ (४/२)

स्मृतिशक्त्या स इति पूर्वानुभूतं स्वलक्षणं परामृशन्नाभासयत्येवान्यथा प्रकाशितस्य परामर्शो न कृतः स्यात्स्वसत्ताकाल एव च तेन स्मरणकाले नष्टस्याप्याभासो न दुष्यति । कदाचित्त्वर्थितावशाद्घटकाञ्चनद्रव्यसत्ताद्यन्यतमैकाभासरूपेणैवास्याः स्फुटावभासोऽन्यदा तु सर्वात्मनार्थित्वेन तथैवातिशयनिरन्तरावहितचेतसस्तु दृष्टार्थप्रत्यक्षीकार एव ॥ २५ ॥

न च युक्तं स्मृतेर्भेदे
स्मर्यमाणस्य भासनम् ।
तेनैक्यं भिन्नकालानां
संविदां वेदितैष सः ॥ २६ ॥ (४/३)

पूर्वानुभूतश्चार्थोऽनुभवेन सह तात्कालिकस्मृतिप्रकाशेऽवभासमानः स्मृत्यभिन्न एव प्रकाशाद्भिन्नस्य प्रका-

1 ख० पु० स व्यापार इति पाठः ।

शमानतानुपपत्तेः। एवं चानुभवस्मृत्यादिसंविदामैक्यं स एवात्मा वेदकः, तथाहि ॥ २६ ॥

नैव ह्यनुभवो भाति
स्मृतौ पूर्वोऽर्थवत्पृथक्।
प्रागन्वभूवमहमि-
त्यात्मारोहणभासनात् ॥ २७ ॥ (५।४)

स्मृतौ स्मर्यमाणोऽनुभूतार्थो[1] यथा पृथग्भूतो भाति न तथानुभवः स्वात्मन एवाहन्ताप्रत्येयस्यानुभवमयत्वेन प्रथनात्, यश्चानेककालोऽहंवेद्योऽर्थः स एवात्मा ॥२७॥

योगिनामपि भासन्ते
न दृशो दर्शनान्तरे।
स्वसंविदेकमानास्ता
भान्ति मेयपदेऽपि वा ॥ २८ ॥ (५।५)

सर्वज्ञानामपि प्रमात्रन्तरगतोपलम्भाः स्वसंविन्मात्रवेद्यस्वभावाः स्वात्मारूढा एवाभासेरन्[2], अतश्च तेषां योगिनां परात्मतापत्तिरेव[3] तत्त्वम्। प्रमेयकक्ष्यायामपि घटादिवत्प्रातिस्विकेन बोधेनावभासेरन्[4] यदि तथा सम्भवेत् ॥ २८ ॥

---

१ ग० पु० भूतोऽर्थ इति पाठः।
२ क० ग० पु० अवभासेरन्निति पाठः। ३ ख० पु० परमेति पाठः।
४ क० ख० शुद्धबोधात्मना रूपेणेति पाठः।

स्मर्यते यद्दृगासीन्मे
सैवमित्यपि भेदतः ।
तस्याकरणमेवास्या
मया दृष्टमिति स्मृतेः ॥ २९ ॥ (४/६)

मया दृष्टमिति प्रमात्रन्तर्गतदर्शनपरामर्शात्मिकायां एव स्मृतेर्विभज्य कथनमेतदेवमनुभवोऽसौ ममाभूदिति भेदेनापि निर्देशः ॥ २९ ॥

या च पश्याम्यहमिमं
घटोऽयमिति वावसा ।
मन्यते समवेतं सा-
व्यवसातरि दर्शनम् ॥ ३० ॥ (४/७)

पुरःस्थितार्थविकल्पनेऽपि घटमिमं पश्यामि घटोऽय-मिति वा प्रमातृमयमेव दर्शनं प्रत्यवमृश्यते ॥ ३० ॥

तन्मया दृश्यते दृष्टोऽ-
यं स इत्यामृशत्यपि ।
ग्राह्यग्राहकताभिन्ना-
वर्थौ भातः प्रमातरि ॥ ३१ ॥ (४/८)

तस्माद्दृक्परामर्शपुरःसरायां स्मृतौ विकल्पमात्रे वा

दृक्शब्दानुवेधं विनापि स इत्ययमिति वार्थमात्रनिर्दे-शेन सर्वत्रैकप्रमातृलीनावेवानुभाव्यानुभावकौ मायाकृ-तविच्छिन्नावभासावपि प्रकाशेते ॥ ३१ ॥

**वर्तमानावभासानां**
**भावानामवभासनम्।**
**अन्तःस्थितवतामेव**
**घटते बहिरात्मना ॥ ३२ ॥**

प्रत्यक्षेऽपि यावदर्थानां भेदेनावभासः प्रमात्रन्तर्ली-नानामेव सतां युक्तः ॥ ३२ ॥

**प्रागिवार्थोऽप्रकाशः स्या-**
**त्प्रकाशात्मतया विना।**
**न च प्रकाशो भिन्नः स्या-**
**दात्मार्थस्य प्रकाशता ॥ ३३ ॥**

प्रमातृसंज्ञाप्रकाशस्वरूपतां विना यथादौ घटोऽस्य नावभातस्तथा ज्ञानकालेऽपि स्यात् प्रकाशमानता चार्थ-स्य प्रकाशः स्वरूपभूतो न तु भिन्नः ॥ ३३ ॥

**भिन्ने प्रकाशे चाभिन्ने**
**संकरो विषयस्य तत्।**

---

१ क० ख० पु० रोधमिति पाठः।

प्रकाशात्मा प्रकाश्योऽर्थो
नाप्रकाशश्च सिद्ध्यति ॥ ३४ ॥ (५१३)

प्रकाशमात्रं चार्थाद्भिन्नं सर्वार्थसाधारणं तस्य घटस्य प्रकाशोऽयमयं पटस्यैवेति विषयनियमो निर्निबन्धनः । तस्मादर्थसिद्धिः प्रकाशात्मतायत्ता ॥ ३४ ॥

तत्तदाकस्मिकाभासो
बाह्यं चेदनुमापयेत् ।
नह्यभिन्नस्य बोधस्य
विचित्राभासहेतुता ॥ ३५ ॥ (५१४)

जडानामाभासमानतैव[1] सत्तासिद्धिः सा चाभासमानतैव । ततश्च बोधमात्रमेवात्र तत्त्वं, तस्याविशेषेऽपि क्रमेण विशिष्यमाणोऽर्थावभासस्ततोऽन्यमप्रकाशमानं हेतुतया बाह्यमर्थमूहयेदिन्द्रियवत् ॥ ३५ ॥

न वासनाप्रबोधोऽत्र
विचित्रो हेतुतामियात् ।
तस्यापि तत्प्रबोधस्य
वैचित्र्ये किं निबन्धनम् ॥ ३६ ॥ (५१५)

विचित्रवासनाप्रबोधो न बोधाद्भिन्नः, तस्यापि

१ ख० ग० पु० आभासतेति पाठः ।

वैचित्र्ये को हेतुस्ततो बाह्य एवार्थो भिन्नाभासहेतुः ॥ ३६ ॥

स्यादेतदवभासेषु
तेष्वेवावासिते सति ।
व्यवहारे किमन्येन
बाह्येनानुपपत्तिना ॥ ३७ ॥ (५।६)

आभासमानैरेवार्थैर्व्यवहारस्ते चाभासात्मकाः सन्तु का क्षतिः । तत्किं बाह्येन कार्यं तावता लोकयात्रासमाप्तेः । बाह्यश्चार्थः प्रमाणबाधितः सावयवो विरुद्धधर्माध्यासादेः, निरवयवश्च दिक्षट्कयोगादेर्बहुशः ॥ ३७ ॥

चिदात्मैव हि देवोऽन्तः-
स्थितमिच्छावशाद्बहिः ।
योगीव निरुपादान-
मर्थजातं प्रकाशयेत् ॥ ३८ ॥ (५।७)

चित्तत्त्वमेवेश्वरत्वात्स्वात्मरूपतयोपपन्नाभासरूपमनन्तशक्तित्वादिच्छादिवशान्मृदादिकारणं विनैव बाह्यत्वेन घटपटादिकमर्थराशिं प्रकाशयेत् ॥ ३८ ॥

अनुमानमनाभात-
पूर्वे नैवेष्टमिन्द्रियम् ।

आभातमेव बीजादे-
राभासाद्धेतुवस्तुनः ॥ ३९ ॥

पूर्वावभासान्तःस्थित एवार्थो नान्तरीयकार्थदर्शनवशात्तत्तद्देशकालादियोजनया विमर्शनमनुमानम्। इन्द्रियमप्यनुमीयते किंचिन्मात्रं निमित्तं तच्च बीजाद्या भासादाभासितमेव ॥ ३९ ॥

आभासः पुनराभासा-
द्बाह्यस्यासीत्कथंचन।
अर्थस्य नैव तेनास्य
सिद्धिर्नाप्यनुमानतः ॥ ४० ॥

घटाद्याभासाद्बाह्यस्यानुपपत्तेर्नासीदाभासस्ततस्तत्र नानुमानादपि सिद्धिः ॥ ४० ॥

स्वामिनश्चात्मसंस्थस्य
भावजातस्य भासनम्।
अस्त्येव न विना तस्मा-
दिच्छामर्शः प्रवर्तते ॥ ४१ ॥

चिदात्मनश्चेश्वरस्यात्मनीवाभेदेनार्थेष्वपि प्रकाशोऽस्त्यन्यथा प्रतिभासमानार्थैकविषयो निर्मातृतामयो वि-

२ ग० पु० अर्थकलापैकेति पाठः।

मर्शो इच्छारूपो न स्यात् ॥ ४१ ॥

स्वभावमवभासस्य
विमर्शं विदुरन्यथा ।
प्रकाशोऽर्थोपरक्तोऽपि
स्फटिकादिजडोपमः ॥ ४२ ॥ (५।११)

प्रकाशस्य मुख्य आत्मा प्रत्यवमर्शस्तं विनार्थभेदिताकारस्यास्य स्वच्छतामात्रं न त्वजाड्यं चमत्कृतेरभावात् ॥ ४२ ॥

आत्मात एव चैतन्यं
चित्क्रियाचितिकर्तृता ।
तात्पर्येणोदितस्तेन
जडात्स हि विलक्षणः ॥ ४३ ॥ (५।१२)

आत्मद्रव्यस्य भावात्मकमप्येतज्जडाद्भेदकतया विमर्शाख्यं मुख्यं रूपमुक्तं चैतन्यं चितिशक्तिर्दृशिरिति सा चेतनक्रिया चितिकर्तृतैव ॥ ४३ ॥

चितिः प्रत्यवमर्शात्मा
परावाक् स्वरसोदिता ।
स्वातन्त्र्यमेतन्मुख्यं त-
दैश्वर्यं परमात्मनः ॥ ४४ ॥ (५।१३)

अभिन्नवाच्याद्या वागमेया[1] नित्यचित्स्वरूपत्वेनाना-धन्ता परतन्त्र[2]भावान्तरानपेक्षं शुद्धमेतत्स्वातन्त्र्यमैश्वर्यसं-ज्ञम् ॥ ४४ ॥

सा स्फुरत्ता महासत्ता
देशकालाविशेषिणी ।
सैषा सारतया प्रोक्ता
हृदयं परमेष्ठिनः ॥ ४५ ॥

स्फुरत्ता स्फुरणकर्तृता अभावा[3]प्रतियोगिनी अभाव-व्यापिनी सत्ता भवत्ता भवनकर्तृता नित्या देशकाला-स्पर्शात्सैव प्रत्यवमर्शात्मा चितिक्रियाशक्तिः । सा विश्वा-त्मनः परमेश्वरस्य स्वात्मप्रतिष्ठारूपा हृदयमिति तत्र त-त्रागमे निगद्यते ॥ ४५ ॥

आत्मानमत एवायं
ज्ञेयीकुर्यात्पृथक्स्थिति ।
ज्ञेयं न तु तदौन्मुख्यात्
खण्ड्येतास्य स्वतन्त्रता ॥ ४६ ॥

एतादृगशुद्धस्वातन्त्र्यवशान्नैष तदा पृथगेव लब्धप्रति-ष्ठंवस्त्ववैति अपि त्वज्ञेयमात्मानमनियन्त्रितप्रभावतया ज्ञे-

---

१ क० ग० पु० वागेषेति पाठः । २ ग० पु० परत्रेति पाठः ।
३ ख० पु० भावप्रतीति पाठः ।

यीकरोति भिन्नज्ञेयसापेक्षत्वे ज्ञानकर्तृता म्लायेत् ॥४६॥

स्वातन्त्र्यामुक्तमात्मानं
स्वातन्त्र्यादद्वयात्मनः ।
प्रभुरीशादिसंकल्पै-
र्निर्माय व्यवहारयेत् ॥ ४७ ॥ (५।१६)

अत एव वेद्यैकीभावलक्षणपूर्णतामयात्स्वातन्त्र्यात्तदानीन्तनमेव वेदकमात्मानमीश्वरः शिवो वेदितेत्येवमादिविकल्पैराभासयति भावनादिव्यवहारार्थम् ॥ ४७ ॥

नाहन्तादिपरामर्श-
भेदादस्यान्यतात्मनः ।
अहंमृश्यतयैवास्य
सृष्टेस्तिङ्वाचकर्मवत् ॥ ४८ ॥ (५।१७)

वर्तमानप्रमातृभावेनाहितप्रत्यवमृश्यस्य प्रमेयत्वेनेदन्ताविमर्शभेदे चाभासभेदे च प्रमातैवेश्वरशब्देन सृष्टोऽहंपरामर्शो व्यवधानेन केवलं यथा क्रियादिशब्देन क्रियादय उच्यन्ते पचत्यादिवत् पचत्यादिमुखेनेत्यभिधानात्, ईश्वरशब्दादात्मशब्दाच्चाहमिति परामृशन्नात्मानमवैति न साक्षात् प्रतीतिस्त्वस्त्येव स्मृत्येवानुभवमुखेनानुभूतस्य ॥ ४८ ॥

मायाशक्त्या विभोः सैव
भिन्नसंवेद्यगोचरा ।
कथिता ज्ञानसंकल्पा-
ध्यवसायादिनामभिः ॥ ४९ ॥

प्रकाशात्मनः परमेश्वरस्य मायाशक्त्या स्वात्मरूपं विश्वं भेदेनाभास्यते, ततः सैव चितिर्ज्ञानमध्यक्षं, तस्यैव भिन्नस्याभातस्य स्मृतिः संकल्पोऽध्यवसायो मनोबुद्धिवृत्तिरूपत्वेनापि चितिरेव ॥ ४९ ॥

साक्षात्कारक्षणेऽप्यस्ति
विमर्शः कथमन्यथा ।
धावनाद्युपपद्येत
प्रतिसंधानवर्जितम् ॥ ५० ॥

साक्षात्कारक्षणज्ञानेऽपि चितोऽर्थप्रत्यवमर्शोऽस्ति सूक्ष्मः, वाचनधावनादौ शीघ्रक्रिया तत्तद्दृश्यमानदेशाद्युपादित्साजिहासानुसंधानेन हि भवेत् ॥ ५१ ॥

घटोऽयमित्यध्यवसा
नामरूपातिरेकिणी ।
परेशशक्तिरात्मेव
भासते न त्विदन्तया ॥ ५१ ॥

अयमिति घट इति वाध्यवसायो भिन्नप्रकाशमाननामरूपातिरिक्तचितिशक्तिमय एवात्मैवाभेदेनावभासते ॥ ५१ ॥

केवलं भिन्नसंवेद्य-
देशकालानुरोधतः।
ज्ञानस्मृत्यवसायादि
सक्रमं प्रतिभासते ॥ ५२ ॥ (५।२१)

चित्तत्त्वस्य मायाशक्त्या भिन्नं घटादि संवेद्यं तत्तद्देशकालभिन्नं प्रकाश्यते, यस्याभेदेनावष्टम्भाद्विभिन्नदेशकालादिना ज्ञानस्मृत्याद्यवभासते ॥ ५२ ॥

अहंप्रत्यवमर्शो यः
प्रकाशात्मापि वाग्वपुः।
नासौ विकल्पः स ह्युक्तो
द्वयाक्षेपी विनिश्चयः ॥ ५३ ॥ (६।१)

प्रकाशस्यात्मन्यहमिति परावाग्रूपत्वात्साभिलापोऽपि स्वभावभूतः प्रत्यवमर्शो न विकल्प इत्युच्यते, स हि प्रतियोगिनिषेधपूर्वो निश्चयो न चात्र प्रतियोगिसम्भवः ॥ ५३ ॥

भिन्नयोरवभासो हि
स्याद्घटाघटयोर्द्वयोः।

प्रकाशस्यैव नान्यस्य
भेदिनस्त्ववभासनम् ॥ ५४ ॥

प्रकाशाद्द्वितीयस्य भिन्नस्य प्रतियोगिनोऽप्रकाशसंज्ञकस्यानवभासने प्रकाशेतरत्वं न स्यात् तस्यानवभासे व्यपोहनायोगाद्विकल्पताहानिः ॥ ५४ ॥

तदतत्प्रतिभाभाजा
मात्रैवातद्व्यपोहनात् ।
तन्निश्चयनमुक्तो हि
विकल्पो घट इत्ययम् ॥ ५५ ॥

प्रमातुरेव स्वतन्त्रस्यान्तर्लीनतदर्थाभासस्यातद्व्यपोहनेन घट इति निश्चयो विकल्पो नाम व्यापारः ॥ ५५ ॥

चित्तत्त्वं मायया हित्वा
भिन्न एवावभाति यः ।
देहे बुद्धावथ प्राणे
कल्पिते नभसीव वा ॥ ५६ ॥

प्रमातृत्वेनाहमिति
विमर्शोऽन्यव्यपोहनात् ।

---

१ क०पु० अपोहेति पाठः ।

विकल्प एव स पर-
प्रतियोग्यवभासजः ॥ ५७ ॥ (६।५)

चित्तत्त्वस्यैवेश्वरस्य मायाशक्त्या भेदावभासिनि शरीरे बुद्धावान्तरे स्पर्शे तदुत्तीर्णे वाकाशे इव शून्ये एव कल्पितेऽहमितिप्रमातृभावेन विमर्शः तत्तदाभासमानशरीरादिप्रतियोग्यपोहनकरणात् घटोऽयमितिवद्विकल्प एव ॥ ५७ ॥ S3 words beginning with प्रमातृभावेन and ending with घटोऽयमिति om. hapl., & given on marg.

कादाचित्कावभासे या
पूर्वाभासादियोजना ।
संस्कारात्कल्पना प्रोक्ता
सापि भिन्नावभासिनि ॥ ५८ ॥ (६।६)

विच्छिन्नविच्छिन्नेषु शून्यदेहाद्याभासभेदेषु पूर्वाभासाख्याहंकाराणामैक्ययोजनान्तःपूर्वावभासस्थितिलक्षण-संस्काराश्रिता प्रमातृव्यापाररूपा कल्पनैव प्रत्यभिज्ञाख्या ॥ ५८ ॥ S3 क्यं S3 पूर्वाभास

तदेवं व्यवहारेऽपि
प्रभुर्देहादिमाविशन् ।
भान्तमेवान्तरर्थौघ-
मिच्छया भासयेद्बहिः ॥ ५९ ॥ Vimarś (६।७)

S3 इति between -सर्गे and वा,

आदिसर्गे वा व्यवहारकालेऽपि वा महेश्वरो माया शक्त्या देहादिमात्मत्वेनाभिनिविश्य प्रमातारं कुर्वन्नन्तः-स्थितं विभान्तमेव तत्तदर्थं क्रमेण बहीरूपं कर्तृशक्त्या-भासयति । यथावभासनमेवापूर्वमेवोत्पादनमस्य, देहा-द्यनाविष्टस्य तु स्वतो युगपदहमिदमिति सर्वार्थप्रकाशः ॥ ५९ ॥ S3 om. तु

एवं स्मृतौ विकल्पे वा-
व्यपोहनपरायणे ।
ज्ञाने वाप्यन्तराभासः
स्थित एवेति निश्चितम् ॥ ६० ॥ (१।८)

सर्वसंवित्सु सर्वार्थावभासः प्रमातृसंलीनश्चित्तत्त्ववदा-नुपूर्व्येण प्रकाशमानः सदा स्थित एव ॥ ६० ॥ S3 om. सदा; S3 orig. नुपूर्व्येण, a.c. नुरूव्येण ।

किंतु नैसर्गिको ज्ञाने
बहिराभासनात्मनि ।
पूर्वानुभवरूपस्तु
स्थितः स स्मरणादिषु ॥ ६१ ॥ (१।९)

ज्ञाने बहिराभासनरूपे[S3 नाम] सहज एव चित्तत्त्वस्यान्तर-र्थावभासः स्मृत्यादौ तु पूर्वानुभवात्माऽत एव स्मृतिः संस्कारजोच्यते ॥ ६१ ॥

१ ख० पु० अपीति पाठः ।

स नैसर्गिक एवास्ति
विकल्पे स्वैरचारिणि ।
यथाभिमतसंस्थाना-
भासनाद्बुद्धिगोचरे ॥ ६२ ॥

स्वतन्त्रस्तु विकल्पश्चक्षुराद्यगोचरमपि बुद्धिविषयतापादनेन यथारुचि पूर्वानुभूतत्वाविमर्शनेन नवमेव तं तमर्थमाभासयति सन्निवेशविशेषं च, तत्रासावर्थः सहज एवास्ति ॥ ६२ ॥

अत एव यथाभीष्ट-
समुल्लेखावभासनात् ।
ज्ञानक्रिये स्फुटे एव
सिद्धे सर्वस्य जीवतः ॥ ६३ ॥

अपूर्वार्थनिर्माणज्ञानसामर्थ्याच्च विकल्प एव सर्वस्य सर्वज्ञत्वं सर्वकर्तृत्वं च स्फुटम् ॥ ६३ ॥

या चैषा प्रतिभा तत्त-
त्पदार्थक्रमरूषिता ।
अक्रमानन्तचिद्रूपः
प्रमाता स महेश्वरः ॥ ६४ ॥

तत्तत्पदार्थक्रमाच्छुरितश्चैषोऽन्तःस्थित एवाभासः स-

र्चसंवित्कालव्याप्यक्रमानन्तचिन्मय आत्मसंज्ञः प्रमाता स्वाङ्गभूते प्रमेये निर्मातृतया महेश्वरश्च ॥ ६४ ॥

तत्तद्विभिन्नसंवित्ति-
मुखैरेकप्रमातरि ।
प्रतितिष्ठत्सु भावेषु
ज्ञातेयमुपपद्यते ॥ ६५ ॥ (८।२)

अनेकसंवित्स्रोतोमुखैरेकप्रमातृसिन्धुमुपलीय भावभेदाः कार्यकारणतादिव्यवहारसमन्वयं भजन्ते ॥ ६५ ॥

देशकालक्रमजुषा-
मर्थानां स्वसमापिनाम् ।
सकृदाभाससाध्योऽसा-
वन्यथा कः समन्वयः ॥ ६६ ॥ (८।३)

स्वस्वरूपमवभासनं च भावानां स्वात्मपरिनिष्ठितमेव, युगपदेकाभासनिबन्धनश्चैषां समन्वयः सोऽभिन्नः प्रमातृलीनतया कल्पते ॥ ६६ ॥

प्रत्यक्षानुपलम्भाना
तत्तद्भिन्नांशपातिनाम् ।
कार्यकारणतासिद्धि-
हेतुतैकप्रमातृजा ॥ ६७ ॥ (८।४)

कार्यकारणभाव इव तत्सिद्धिरपि प्रत्यक्षानुपलम्भैरेकप्रमातृमुखेन समन्वयमागत्य समन्विता, प्रत्यक्षानुपलम्भाः क्रमिकस्वविषयमात्रज्ञापनक्षीणा नान्योन्यापेक्षोपलक्षणक्षमाः ॥ ६७ ॥

स्मृतौ यैव स्वसंवित्तिः
प्रमाणं स्वात्मसम्भवे ।
पूर्वानुभवसद्भावे
साधनं सैव नापरम् ॥ ६८ ॥ (७/५)

पूर्वानुभवस्वसंवेदनस्याभावात् स्मृतिस्वसंवेदनमेवात्रैकार्थाभासमयप्रमातृरूपं स्मृतिस्वरूपे इव प्रमाणं स्मृतेः पूर्वानुभवाभासाभावे कार्यकारणभावासिद्धेर्न कार्यलिङ्गता ॥ ६८ ॥

बाध्यबाधकभावोऽपि
स्वात्मनिष्ठाविरोधिनाम् ।
ज्ञानानामुदियादेक-
प्रमातृपरिनिष्ठितेः ॥ ६९ ॥ (७/६)

भिन्नस्वाभासमात्रनिष्ठानां ज्ञानानां को विरोधस्तत्कथं बाध्यबाधकत्वमेकप्रमातृविश्रान्तौ तु युक्तम् ॥ ६९ ॥

---

१ ग० पु० ज्ञानपरिक्षीणा इति पाठः ।

विविक्तभूतलज्ञानं
घटाभावमतिर्यथा ।
तथा चेच्छुक्तिकाज्ञानं
रूप्यज्ञानाप्रमात्ववित् ॥ ७० ॥ (७।७)

इह भूतले घटो नास्तीति घटाभावज्ञानं केवलभूतलज्ञानमेव शून्यभूतलस्य घटाभावरूपत्वात् । तथैव यदि शुक्तिकारजतयोरपरस्परात्मत्वाच्छुक्तिकाज्ञानमिति प्रत्यक्षबाधकम् ॥ ७० ॥

नैवं शुद्धस्थलज्ञाना-
त्सिद्ध्येत्तस्याघटात्मता ।
न तूपलब्धियोग्यस्या-
प्यत्राभावो घटात्मनः ॥ ७१ ॥ (७।८)

केवलभूतलज्ञानाद्भूतलस्याघटात्मता सिद्ध्यति न तु तत्राधारे भिन्नो दर्शनयोग्योऽपि घटो नास्तीति ॥७१॥

विविक्तं भूतलं शश्व-
द्भावाना स्वात्मनिष्ठितेः ।
तत्कथं जातु तज्ज्ञानं
भिन्नस्याभावसाधनम् ॥ ७२ ॥ (७।९)

भूतलमभूतलविविक्तं सदैव तत्कथं तज्ज्ञानं कदाचि-

देव तत्र भिन्नघटाभावं साधयेत्, भिन्नघटविविक्तता च भूतलस्य कादाचित्कं रूपं स्याद्यदि घटसहिततापि कदाचित्स्वरूपं भवेन्नत्वेवं, पदार्थौ द्वावेव स्वात्मपरिनिष्ठितौ साहित्येन तदतिरिक्तमुभयात्मकमेकरूपं ज्ञानमेकं तूभयाभाससंसर्गात्मकमप्येकाभासं ज्ञानान्तराभावरूपं वस्तु पुनः स्वात्मनिष्ठमेव परिच्छिनत्तीति न वस्तुबलेन प्रदेशदर्शनात्प्रदेशसिद्धिवद्घटाभावसिद्धिरुभयाभासकैकज्ञानात्मककार्याभाववत्तु स्यात्, न चैवं व्यवधानेन प्रतीतिः प्रदेशदर्शनादेव तथा सिद्धेः ॥ ७२ ॥

किंत्वालोकचयोऽन्धस्य
　स्पर्शो वोष्णादिको मृदुः ।
तत्रास्ति साधयेत्तस्य
　स्वज्ञानमघटात्मताम् ॥ ७३ ॥

प्रदेशेष्वालोकप्रसरं सन्तमसे मृदुमुष्णादिकं स्पर्शं वा घटरूपस्पर्शाभावात्मकमनुभूयालोकादि घटाभावोऽत्रास्ति घटो नास्तीति व्यवहर्तुं युक्तम् ॥ ७३ ॥

पिशाचः स्यादनालोकोऽ-
　प्यालोकाभ्यन्तरे यथा ।
अदृश्यो भूतलस्यान्त-
　रनिषेध्यः स सर्वथा ॥ ७४ ॥

---

१ क० पु० भासात्मकेति पाठः । २ ख० पु० पूरमिति पाठः ।

न चैवमालोकस्य पिशाचान्यत्वात्तत्रापि पिशाचनिषेधप्रसङ्गः स ह्यदृश्योऽन्यत्वेऽपि यथा भूगोलस्यान्तरनिवार्यस्तथालोकस्यान्तरे, ततस्तस्यान्यस्मृत इवासन्नतेऽपि नादृश्यत्वाभावसिद्धिः ॥ ७४ ॥

एवं रुप्यविदाभाव-
रूपा शुक्तिमतिर्भवेत्।
न त्वाद्यरजतज्ञप्तेः
स्यादप्रामाण्यवेदिका ॥ ७५ ॥

शुक्तिज्ञानमेव रजतज्ञानाभावरूपं सिद्ध्यति तदानीन्तनशुक्तिज्ञानस्याप्रामाण्ये सा ॥ ७५ ॥

धर्म्यसिद्धेरपि भवे-
द्बाधा नैवानुमानतः।
स्वसंवेदनसिद्धा तु
युक्ता सैकप्रमातृजा ॥ ७६ ॥

शुक्तिकाज्ञानकाले च न पूर्वं रजतज्ञानमस्ति ततः स धर्मी न सिद्ध इति नानुमानेन बाधा, एकप्रमातृमयसंवेदने त्वेकदेशावष्टम्भ्युभयज्ञानमसंबद्धं भासनात्सिद्ध्यति। पश्चात्ससंवादप्रत्यक्षे स्वसंवेदने पूर्वस्यापि

१ ख० पु० अन्यथात्व इति पाठः। २ क० ख० दृश्यत्वादभावेति पाठः।

तस्याभासनादेकं प्रमाणमितरदन्यथेति भवति संवादो-ऽप्येकप्रमातृकृतः ॥ ७६ ॥

इत्थमत्यर्थभिन्नार्था-
वभासखचिते विभौ ।
समलो विमलो वापि
व्यवहारोऽनुभूयते ॥ ७७ ॥

मायाशक्त्या भेदविषयोऽयं सर्वो व्यवहारस्तथा ज्ञानिनां शुद्धोऽज्ञानिनां तु मलिनस्तत्तद्भिन्नार्थावभासभाजि भगवति संभाव्यतेऽनुभवेन ॥ ७७ ॥

तात्कालिकाक्षसामक्ष्य-
सापेक्षाः केवलं क्वचित् ।
आभासा अन्यथान्यत्र
त्वन्धान्धतमसादिषु ॥ ७८ ॥

आभासाः कदाचित् सन्निहितप्रत्यक्षाक्षिप्ता घटोयमिति व्यवहारहेतोरन्धतमसादौ तु पूर्वानुभवोत्थिताः ॥ ७८ ॥

विशेषोऽर्थावभासस्य
सत्तायां न पुनः क्वचित् ।

विकल्पेषु भवेद्भावि-
भवद्भूतार्थगामिषु ॥ ७९ ॥ (८/२)

स्मृत्युत्प्रेक्षारूपेषु प्रत्यक्षपृष्ठपातिषु स्वतन्त्रेषु वा अन्येषु विकल्पेषु कालत्रयविषयेष्वर्थावभासोऽन्तस्तुल्य एवावस्थितः ॥ ७९ ॥

सुखादिषु च सौख्यादि-
हेतुष्वपि च वस्तुषु ।
अवभासस्य सद्भावेऽ-
प्यतीतत्वात्तथा स्थितिः ॥ ८० ॥ (८/३)

सुखदुःखाद्याभासास्तत्साधनाभासाश्च सदैवान्तःसन्तोऽपि न तथाह्लादादिमयीं स्थितिं कुर्वन्ति अतीतत्वात् बहिस्तदानीमभावात्, तदात्वविशिष्टानां च तथाकारित्वात् ॥ ८० ॥

गाढमुल्लिख्यमाने तु
विकल्पेन सुखादिके ।
तथा स्थितिस्तथैव स्यात्
स्फुटमस्योपलक्षणात् ॥ ८१ ॥ (८/४)

कुतश्चित् प्रयत्नविशेषात् स्वतन्त्रविकल्पोल्लिखितं स्फुटमेव सुखादिजातं तथा विकासादिहेतुः ॥ ८१ ॥

भावाभावावभासाना
बाह्यतोपाधिरिष्यते ।
नात्मा सत्ता ततस्तेषा-
मान्तराणां सतां सदा ॥ ८२ ॥

भावाभावावभासानां भावाभावविषयाणामबहीरूपत्वेऽपि सत्तास्त्येव स्मृत्यादौ बाह्यत्वं हि तेषामुपाधिर्न स्वरूपम्, अभावाभासस्यान्तःसत्तायामपि बहिरभावात्तथात्वम् ॥ ८२ ॥

आन्तरत्वात्प्रमात्रैक्ये
नैषां भेदनिबन्धना ।
अर्थक्रियापि बाह्यत्वे
सा भिन्नाभासभेदतः ॥ ८३ ॥

अन्तश्च सर्वेषामेव नीलसुखाद्याभासानां सदसत्त्वेऽपि प्रमातृमात्ररूपत्वात् कार्यकारणादिभेदाश्रया नार्थक्रिया, प्रमातुर्भेदे हि बौद्धचाक्षुपत्वादिभेदेन आभासभेदादाभासाश्रितार्थकारितापि भिद्यते रूपादीनाम् ॥८३॥

चिन्मयत्वेऽवभासाना-
मन्तरेव स्थितिः सदा ।
मायया भासमानानां
बाह्यत्वाद्बहिरप्यसौ ॥ ८४ ॥

चित्स्वरूपत्वेनाभासानां सदान्तस्तत्त्व एव स्थितिः । मायाशक्त्या बहिः प्रत्यक्षत्वेन प्रकाशमानेषु भावेषु प्रकाशाव्यतिरिक्तेषु बहिराभास इत्युच्यते, तदापि तेषामान्तरत्वमेव सिसृक्षादौ तु भावानामपि ॥ ८४ ॥

विकल्पे योऽयमुल्लेखः
सोऽपि बाह्यः पृथक्प्रथः ।
प्रमात्रैकात्म्यमान्तर्यं
ततो भेदो हि बाह्यता ॥ ८५ ॥

विकल्पे घटाद्युल्लेखश्चक्षुराद्यगोचरोऽपि पृथगाभासाद् बाह्य एव अहंविमर्शो हि आन्तरत्वमिदमिति तु बाह्यता । एवं घटादीनामुभयी बाह्यान्तःकरणद्वयीवेद्यता, सुखादेस्त्वेकान्तःकरणवेद्यतैव ॥ ८५ ॥

उल्लेखस्य सुखादेश्च
प्रकाशो बहिरात्मना ।
इच्छातो भर्तुरध्यक्ष-
रूपोऽक्षादिभुवां यथा ॥ ८६ ॥

उल्लेखस्य सुखदुःखादीनां चेश्वरस्य साक्षात्काररूपो बौद्धः प्रकाशः ॥ ८६ ॥

तदैक्येन विना न स्या-
त्संविदां लोकपद्धतिः ।

**प्रकाशैक्यात्तदेकत्वं**

**मातैकः स इति स्थितम् ॥ ८७ ॥** (८।७)

तत्तद्विच्छिन्नसंविदनुसंधानेन व्यवहार एक[1] एव प्रकाशात्मा, तदनुसंधानरूपः स एवैकः प्रमाता परमात्मसंज्ञः ॥ ८७ ॥

**स एव विमृशत्त्वेन**

**नियतेन महेश्वरः ।**

**विमर्श एव देवस्य**

**शुद्धे ज्ञानक्रिये यतः ॥ ८८ ॥** (८।११)

स परमात्मा चिद्रूपो विमर्शाख्येनैव मुख्यस्वभावेनाव्यभिचारिणा महेश्वरश्चित्तत्त्वस्य विश्वात्मनः शिवसंज्ञस्याहंविमर्शनमेव शुद्धे ज्ञानक्रिये, भिन्नाभिन्नज्ञेयकार्यगते त्वीश्वरस्य शुद्धाशुद्धे, भिन्नार्थविषयत्वे पुंसः सत्त्वरजोवृत्तिरूपे प्रकाशप्रवृत्तिसंज्ञे तमसा संकुचिते अशुद्धे एव ॥ ८८ ॥

इति प्रत्यभिज्ञाकारिकावृत्तौ श्रीमदाचार्योत्पलदेवकृतायां
ज्ञानाधिकारः प्रथमः ॥ १ ॥

---

१ क० ख० पु० एकश्चेति पाठः ।

अथ

# द्वितीयः क्रियाधिकारः ।

———:00:0———

अथ प्रथमो विमर्शः

अत एव यदप्युक्तं

क्रिया नैकस्य सक्रमा ।

एकेत्यादि प्रतिद्धिष्टं

तदेकस्य समर्थनात् ॥ १ ॥ १ "

एकचित्तत्त्वसमर्थनादेकसंबन्धी व्यापार एक एवेति क्रियाप्यपाकृतदूषणा ॥ १ ॥

सक्रमत्वं च लौकिक्याः

क्रियायाः कालशक्तितः ।

घटते न तु शाश्वत्याः

प्राभव्याः स्यात्प्रभोरिव ॥ २ ॥ २ "

मायाशक्तेर्भिन्नावभासानां क्रिया कालशक्तिवशात् सक्रमा न त्वात्मविमर्शरूपा अनादिनिधना प्रभोः स्वभावभूता ॥ २ ॥

कालः सूर्यादिसंचार-

स्तत्तत्पुष्पादिजन्म वा ।

शीतोष्णौ वाथ तल्लक्ष्यः
क्रम एव स तत्त्वतः ॥ ३ ॥ ३॥

सा सा प्रसिद्धा क्रिया कालः शीतादिर्वा तदुपलक्षितः सर्वभिन्नावभासमानभावोपाधिभूतः क्रम एवासौ तस्यैवोपयोगात् ॥ ३ ॥

क्रमो भेदाश्रयो भेदो-
ऽप्याभाससदसत्त्वतः ।
आभाससदसत्त्वे तु
चित्राभासकृतः प्रभोः ॥ ४ ॥ ४॥

अन्योन्याभासशून्यभिन्नभावावभासवैचित्र्यक्रियैव प्रभोः भावेषु क्रमहेतुः ॥ ४ ॥

मूर्तिवैचित्र्यतो देश-
क्रममाभासयत्यसौ ।
क्रियावैचित्र्यनिर्भासा-
त्कालक्रममपीश्वरः ॥ ५ ॥ ५॥

अनेकस्यान्योन्यभेदाभासाद्देशक्रमः क्रियामुखेन कालक्रमोऽपि, एकस्य तु भावस्य तत्तज्जन्मसत्तापरिणामादिक्रियाभेदात् कालक्रम एव ॥ ५ ॥

सर्वत्राभासभेदोऽपि
भवेत्कालक्रमाकरः ।

२।१



विच्छिन्नभासः शून्यादे-
　　र्मातुर्भातस्य नो सकृत् ॥ ६ ॥ ६ ॥

सर्वत्रार्थे विचित्रोऽवभासः शून्यदेहादेरेव प्रमातुः कालक्रमाभासहेतुः, स हि प्राक्कालो न तथा तदानीं भासते, स्मृतिं विहाय स्ववर्तमानापेक्षया चासौ भूतभविष्यत्ते व्यवहरति; सकृद्विभातस्य तु भासमानक्रियाविच्छेदादभ्यावृत्तिगणनाभावात्[1] आत्मनीवार्थेष्वपि न कालभेदः ॥ ६ ॥

S3 स्य but same area over.

देशक्रमोऽपि भावेषु
　　भाति मातुर्मितात्मनः ।
स्वात्मेव स्वात्मना पूर्णा
　　भावा भान्त्यमितस्य तु ॥ ७ ॥ ७ ॥

परिमितं प्रमातारमपेक्ष्य भावास्ततोऽन्योन्यं भिन्ना दूरादिव्यपदेशभाजश्च प्रकाशैकरूपत्वेन त्वीश्वरस्य न क्वाप्यप्रकाशसम्भवः, परमाणावपि प्रकाशघनस्य नात्मनो भिन्नं दूरं वा अन्योन्यतो वा किंचिदाभाति ॥ ७ ॥

S3 om.

किंतु निर्माणशक्तिः सा-
　　प्येवंविदुष ईशितुः ।

---

१ क० पु० आवृत्तीति पाठः ।

तथा विज्ञातृविज्ञेय-

भेदो यदवभास्यते ॥ ८ ॥ ८ ॥

एवं पूर्णतया प्रकाशमानस्यापि परमेश्वरस्य सैषा सृष्टिशक्तिर्यज्ज्ञातृज्ञेयस्वभावा भावाः स्वतोऽन्योन्यं च विभागेनावसीयन्ते, न च तथावसायेन स्वरूपस्थितिस्तिरोधीयते ॥ ८ ॥

अथ द्वितीयो विमर्शः

क्रियासंबन्धसामान्य-

द्रव्यदिक्कालबुद्धयः ।

सत्याः स्थैर्योपयोगाभ्या-

मेकानेकाश्रया मताः ॥ ९ ॥ १ ॥

क्रियावदन्येऽपि संबन्धादय एकानेकविषया अपि सत्याभासाः, सर्वदोपयोगिनामेषामर्थवत्त्वेनापरिहरणीयत्वात् ॥ ९ ॥

तत्रैकमान्तरं तत्त्वं

तदेवेन्द्रियवेद्यताम् ।

संप्राप्यानेकतां याति

देशकालस्वभावतः ॥ १० ॥ २ ॥

अभिन्नमेव तत्त्वमन्तर्बहिराभासभेदादेकानेकं बहिर्देशकालस्वभावभेदाभाससम्भेदमयैकस्वलक्षणाभासाना -

मनेकत्वात् ॥ १० ॥

तद्द्वयालम्बना एता
मनोऽनुव्यवसायि सत्।
करोति मातृव्यापार-
मयीः कर्मादिकल्पनाः ॥ ११ ॥ ३॥

मध्यस्थतयान्तर्बहिस्तत्त्वविषया मानस्यः क्रियादिकल्पना मातृव्यापाररूपाः ॥ ११ ॥

स्वात्मनिष्ठा विविक्ता वा
भावा एकप्रमातरि।
अन्योन्यान्वयरूपैक्य-
युजः संबन्धधीपदम् ॥ १२ ॥ ४॥

राज्ञः पुरुष इत्यादिसंबन्धधियोऽन्तःसमन्वयादैक्यं बहिःसंबन्धभेदं चालम्बन्ते ॥ १२ ॥

जातिद्रव्यावभासानां
बहिरप्येकरूपताम्।
व्यक्त्येकदेशभेदं चा-
प्यालम्बन्ते विकल्पनाः ॥ १३ ॥ ५॥

गावश्चैत्र इति च मतयो बहिरपि गोमात्रैकघनपुरु-

पविशेषाकाराभासैक्यं स्वलक्षणावयवाभासबहुत्वं च परामृशन्ति ॥ १३ ॥

क्रियाविमर्शविषयः
कारकाणां समन्वयः।
अवध्यवधिमद्भावा-
न्वयालम्बा दिगादिधीः ॥ १४ ॥ ६॥

काष्ठस्थालीदेवदत्तौदनानां पचतीत्यन्तःसमन्वयाद्बहिर्भेदाच्चैकानेकविषया क्रियामतिः, देशकालक्रमोऽपि भाति भावानामवध्यवधिमद्रूपाणामन्योन्यापेक्षः समन्वयभेद एव तथैवैकानेकमयो, जातिद्रव्यक्रियासंख्यादिमतयः सर्वा एव संबन्धविशेषसमवायविषया एव ॥ १४ ॥

एवमेवार्थसिद्धिः स्या-
न्मातुरर्थक्रियार्थिनः।
भेदाभेदवतार्थेन
तेन न भ्रान्तिरीदृशी ॥ १५ ॥ ७॥

एकानेकरूपैरेव क्रियादिभिरेवमाभासानुगुण्यरूपः प्रमातुस्तदर्थिनोऽर्थक्रियासंवादस्ततो न तद्बुद्धयो भ्रान्ताः ॥ १५ ॥ अथ तृतीयो विमर्शः

इदमेतादृगित्येवं
यद्वशाद्व्यवतिष्ठते।

वस्तु प्रमाणं तत्सोऽपि
स्वाभासोऽभिनवोदयः ॥ १६ ॥ १"

सोऽन्तस्तथाविमर्शात्मा
देशकालाद्यभेदिनि।
एकाभिधानविषये
मितिर्वस्तुन्यबाधिता ॥ १७ ॥ २"

यदायत्ता हि वस्तुनः स्वरूपेण नित्यतादिविशेषणैर्या व्यवस्थाप्यमानता स प्रमातुः स्वत्वेनापूर्ववस्त्ववभास एव स्थितः प्रमाणम्। स एव चाभासोऽयमिति नित्य इति वा तथैव पृथक्तयाऽभिनवत्वेन च प्रमातर्युपारूढो विमर्शरूपतामापन्नो विमर्शभेदानुसार्यैकैकशब्दवाच्ये पृथक्पृथगेव तिरस्कृतदेशादिभेदे तस्मिन्नाभात एव सामान्यरूपे वस्तुनि स्वकार्थक्रियाप्राप्तेः प्रमाणान्तरेणाबाधितस्थैर्या प्रमितिः प्रमातृव्यापारः॥१७॥

यथारुचि यथार्थित्वं
यथाव्युत्पत्ति भिद्यते।
आभासोऽप्यर्थ एकस्मि-
न्ननुसंधानसाधिते ॥ १८ ॥ ३"

एकस्मिन्नेव चैकप्रत्यवमर्शसामर्थ्योपपादिते वस्तुनि

स्वेच्छावशादार्थित्वानुरोधाद्वा नैपुणवशाद्वावभासभेदः १८

दीर्घवृत्तोर्ध्वपुरुष-
धूमचान्दनतादिभिः ।
यथावभासा भिद्यन्ते
देशकालाविभेदिनः ॥ १९ ॥

तथैव सद्घटद्रव्य-
काञ्चनोज्ज्वलतादयः ।
आभासभेदा भिन्नार्थ-
कारिणस्ते पदं ध्वनेः ॥ २० ॥

तथा हि एकस्मिन्नेव घटादावर्थेऽवधित्सावशाद्दीर्घता त्र्यश्रता पारिमाण्डल्यादि चाभाति, चिह्नव्यवधानच्छायामात्रार्थितायां पुरुष एवोर्ध्वमात्रं भवति, तत्कार्यार्थितायां न्यक्षेणेक्षमाणस्य पुरुषो धूममात्रमेव कस्यचिदाभासते । तद्विदस्तु तार्णतादिमणिरूप्यादिविशेषभावः । स च तथा भिद्यमानोऽपि देशकालभेदं न स्पृशति, तथैव घट एव सन्नित्याभासोऽन्यादृगेव घटाद्यनन्ताशेषार्थसाधारणः सत्तामात्रसाध्यसत्परामर्शाद्यर्थक्रियाकारी, तत्रैव घट इति चाभासोऽन्तर्बहिष्करणज्ञेयः पृथुबुध्नोदराकारार्थसामान्योऽन्य एव यो घटादिषु

१ ख० पु० पदार्थेति पाठः ।

बुध्नोदराकारार्थसामान्योऽन्य एव यो घटादिषु नास्ति, काञ्चन इति मृण्मयादिषु नास्ति तथार्थितादिवशादै-न्द्रियक एव जायते, एकैकश्चासावाभास एकैकशब्देन व्यवहारार्थं तत्तन्नियतार्थक्रियार्थिभिरघट इति सन्नाभि-धीयते न काञ्चन इति घटाभासः, चैत्र इति बाल्यादि-साधारणो देशादिभिर्रभिहितस्तथैव च ततोऽर्थक्रिया भिन्ना ॥ २० ॥

आभासभेदाद्वस्तूनां
नियतार्थक्रिया पुनः ।
सामानाधिकरण्येन
प्रतिभासादभेदिनाम् ॥ २१ ॥

एकस्मिन्नेव स्वलक्षणे प्रत्याभासं नियतिशक्त्या का-र्यं नियमितं तथाभूतानेककार्यकृदाभासभेदाधिकरणमेकं च सामानाधिकरण्याभासवशाद्वस्तु, अनेकस्यैकता हि सामानाधिकरण्यम् ॥ २१ ॥

पृथग्दीपप्रकाशानां
स्रोतसां सागरे यथा ।
अविरुद्धावभासाना-
मेककार्या तथैक्यधीः ॥ २२ ॥

---

१ ग० पु० विरहित इति पाठः ।

भिन्नाः प्रदीपप्रभा अविभागेनावभासन्ते नदीप्रवाहाः सिन्धुबुद्धौ, पानके च ते ते रसाः, तथा शौक्ल्यमहत्त्वपटत्वाद्यवभासाः परस्परानुप्रवेशक्षमाः न तु नीलपीताद्यवभासाः तत्तदेककार्यैकद्रव्याभासभावेन कल्पन्ते प्रत्यक्ष एव तत्सामानाधिकरण्यम् ॥ २२ ॥

तत्राविशिष्टे वह्न्यादौ
कार्यकारणतोष्णता ।
तत्तच्छब्दार्थताद्यात्मा
प्रमाणादेकतो मतः ॥ २३ ॥ ८ ॥

कदाचिद् देशादिसहभावावच्छिन्नस्वलक्षणरूपविशेषत्यागेन एकसामान्यरूपाग्न्याभास[1] एव त्रैलोक्यत्रैकाल्यगामित्वेन निजप्रमाणादेकस्मादेव विशिष्टकार्यकारणोष्णोर्ध्वभागग्निशब्दवाच्यतादिसिद्धिः ॥ २३ ॥

सा तु देशाधिकाध्यक्षा-
न्तरभिन्ने स्वलक्षणे ।
तात्कालिकी प्रवृत्तिः स्या-
दर्थिनोऽप्यनुमानतः ॥ २४ ॥ ९ ॥

a.c. कार्य- कार्यप्रवृत्तिः पुनर्देशकालादिप्रत्यक्षभेदसाहित्येन स्व-

---

[1] ग० ख० पु० भासमात्र इति पाठः।

लक्षणे, एतदर्थितया प्रमाणसमूहादेवानुमानादपि धर्मिप्रत्यक्षविशिष्टादेव प्रवृत्तिः ॥ २४ ॥

दूरान्तिकतयार्थानां
परोक्षाध्यक्षतात्मना ।
बाह्यान्तरतया दोषै-
र्व्यञ्जकस्यान्यथापि वा ॥ २५ ॥ १० ॥

भिन्नावभासच्छायाना-
मपि मुख्यावभासतः ।
एकप्रत्यवमर्शाख्या-
देकत्वमनिवारितम् ॥ २६ ॥ ११ ॥

दूरान्तिकत्वादिषु स्फुटत्वास्फुटत्वादिना बहिरन्तश्चरत्वेन वाभासस्य च्छायामात्रभेदेऽपि तन्मुख्यस्वभावरूपप्रत्यवमर्शैक्यादर्थानामैक्यमपबाधितम् ॥ २६ ॥

अर्थक्रियापि सहजा
नार्थानामीश्वरेच्छया ।
नियता सा हि तेनास्या
नाक्रियातोऽन्यता भवेत् ॥ २७ ॥ १२ ॥

उल्लेखघटादीनां बाह्यार्थक्रियाविरहेऽपि घटादितैव

स्वाभाविकत्वादस्या ईश्वरेण प्रत्याभासं नियमितायाः ॥ २७ ॥

रजतैक्यविमर्शेऽपि
शुक्तौ न रजतास्थितिः।
उपाधिदेशासंवादाद्
द्विचन्द्रेऽपि नभोऽन्यथा ॥ २८ ॥ १३ ॥

रजते शुक्तौ च रजतविमर्शैक्येन रजतत्वेऽपि पुनः शुक्तिदेशसंगतिबाधनेन उपाधिसंवादाभावात्तद्बुद्धिरस्थैर्याद् भ्रान्ता, द्विचन्द्रेऽपि नभोदेशासंवादान्मिथ्या ॥ २८ ॥

गुणैः शब्दादिभिर्भेदो
जात्यादिभिरभिन्नता।
भावानामित्थमेकत्र
प्रमातर्युपपद्यते ॥ २९ ॥ १४ ॥

भावानां शब्दरूपसंस्थानादिना भेदाक्षेपो जात्यादिना चैकताक्षेपोऽनुभूयमानः प्रमात्रैक्ये घटते, अन्योन्यभेदव्यवस्थाप्यनुसंधानायत्ता ॥ २९ ॥

विश्ववैचित्र्यचित्रस्य
समभित्तितलोपमे।

---

१ क० ग० पु० तस्या इति पाठः।

विरुद्धाभावसंस्पर्शे
परमार्थसतीश्वरे ॥ ३० ॥

प्रमातरि पुराणे तु
सर्वदाभातविग्रहे ।
किं प्रमाणं नवाभासः
सर्वप्रमितिभागिनि ॥ ३१ ॥

अपूर्वाभासस्यासिद्धवस्तुसाधनान्नित्यावभासिनः प्रमातुर्न प्रमाणोपयोगः, तत्तन्नवावभासानां तत्प्रमाणत्वात् कामं स प्रमाणमन्यस्य स्यान्न तु स्वात्मनः सदा सिद्धस्य, केवलं विभुः प्रमितौ स्वातन्त्र्यात् प्रमातैव, ते ते विचित्रा विश्वाभासाः तस्मिन् स्थायिनि वैचित्र्येणोपपद्यन्ते । तदिच्छातोऽपरावभासमानार्थानां तत्सारस्वरूपभ्रंशे च मायाशक्तिवशादुन्मज्जननिमज्जने तत्त्वतस्तस्या वा पराधीना सत्ता सदातनी पुरातनी विरुद्धप्राक्प्रध्वंसाभावादियोगात्सोऽपि यावदुपदिश्येत[1] भावाभावाभ्यां तावत्स एव प्रमातृतां भजते उपदिदिक्षोरभावादुपदेशानुपपत्तिः ॥ ३१ ॥

अप्रवर्तितपूर्वोऽत्र
केवलं मूढतावशात् ।

---

१ ग० ख० पु० उद्दिश्यत इति पाठः ।

शक्तिप्रकाशेनेशादि-

व्यवहारः प्रवर्त्यते ॥ ३२ ॥ १० ॥

मायाव्यामोहवशात् केवलमस्मिन्नात्मनि प्रमातृरूपे शिवेश्वरादिव्यवहारो यो न प्रवर्तितः स शुद्धस्वातन्त्र्यादिहेतुप्रदर्शनेन भावनाद्युपदेशाय साध्यते ॥ ३२ ॥

अथ चतुर्थो विमर्शः

एष चानन्तशक्तित्वा-

देवमाभासयत्यमून् ।

भावानिच्छावशादेषा

क्रिया निर्मातृतास्य सा ॥ ३३ ॥ १ ॥

प्रमाता चिद्रूपोऽनन्तशक्तिरीश्वरः स्वेच्छावशात्तानाभासानाभासयेत् सैवेच्छाशक्तिर्निर्मातृताख्या क्रिया तस्य ॥ ३३ ॥

जडस्य तु न सा शक्तिः

सत्ता यदसतः सतः ।

कर्तृकर्मत्वतत्त्वैव

कार्यकारणता ततः ॥ ३४ ॥ २ ॥

जडं प्रधानपरमाणुबीजादि तु न शक्तमसतो निर्माणे, कर्तृत्वमेव हि कारणत्वं कर्मतैव च कार्यत्वं न त्वन्यत् ॥ ३४ ॥

यदसत्तदसद्युक्ता
नासतः सत्स्वरूपता ।
सतोऽपि न पुनः सत्ता-
लाभेनार्थोऽथ चोच्यते ॥ ३५ ॥ ३॥

कार्यकारणता लोके
सान्तर्बहिःपरिवर्तिनः ।
उभयेन्द्रियवेद्यत्वं
तस्य कस्यापि शक्तितः ॥ ३६ ॥ ४॥

असतः[1] सत्स्वभावता विरुद्धा सतश्च सिद्धा। सिद्धस्यैवान्तर्बाह्यान्तःकरणद्वयीवेद्यतापादनमीश्वरेणोत्पादनम् ॥ ३६ ॥

एवमेका क्रिया सैषा
सक्रमान्तर्बहिःस्थितिः ।
एकस्यैवोभयाकार-
सहिष्णोरुपपादिता ॥ ३७ ॥ ५॥

सैषा क्रियान्तर्बहिःस्थितिरूपतया सक्रमाप्येकस्य स्वसंवित्सिद्धस्य कर्तुराभासच्छायाभेदेनैकत्वेन प्रत्यवमृश्य-

१ ग० पु० सत्ता असत्स्वभावतेति पाठः ।

२१४



स्य कर्मणश्चैकस्य संबन्धिनी तदभिन्नाश्रयत्वादेकत्वेन साधिता ॥ ३७ ॥

बहिस्तस्यैव तत्कार्यं
यदन्तर्यदपेक्षया।
प्रमात्रपेक्षया चोक्ता
द्वयी बाह्यान्तरस्थितिः ॥ ३८ ॥ ६॥

अर्थस्य बाह्यतापादनं ततो बाह्यता कार्यता चैकापेक्षा, प्रमातारमपेक्ष्य चान्तर्बहिर्व्यवहारः ॥ ३८ ॥

मातैव कारणं तेन
स चाभासद्वयस्थितौ।
कार्यस्य स्थित एवैक-
स्तदेकस्य क्रियोचिता ॥ ३९ ॥ ७॥

एवं प्रमातैव कारणं स च बाह्याभ्यन्तरकार्याभासक्रमोऽप्येक एवेत्येवमप्येकस्य कर्तुः सिद्धा क्रिया ॥ ३९ ॥

अत एवाङ्कुरेऽपीष्टो
निमित्तं परमेश्वरः।
तदन्यस्यापि बीजादे-
र्हेतुता नोपपद्यते ॥ ४० ॥ ८॥

बाह्यतापादनमुत्पादनमिति चिद्रूपस्यैव कारणता त-तोऽङ्कुरादौ निमित्तकारणत्वेनेश्वरः कैश्चिदिष्टः, न चापि बीजादेर्जडस्य कारणता निरनुसंधानस्य युक्ता ॥ ४० ॥

तथा हि कुम्भकारोऽसा-
वैश्वर्यैव व्यवस्थया ।
तत्तन्मृदादिसंस्कार-
क्रमेण जनयेद्धटम् ॥ ४१ ॥ ९ ॥

कुम्भकाररूपे प्रमातरि कारणे स्थितेऽपि मृदादि-संस्कारापेक्षा घटस्येश्वरकृतनियतिसंज्ञमर्यादया न स्व-भावेन ॥ ४१ ॥

योगिनामपि मृद्बीजे
विनैवेच्छावशेन तत् ।
घटादि जायते तत्त-
त्स्थिरस्वार्थक्रियाकरम् ॥ ४२ ॥ १० ॥

मृदाद्यनपेक्ष्य योगिनामिच्छामात्रेण घटादेः स्थिरस्य घटाद्यर्थक्रियाकारिणश्च निर्वृत्तिः ॥ ४२ ॥

योगिनिर्माणताभावे
प्रमाणान्तरनिश्चिते ।

---

६३ १ ख० ग० पु० बाह्याभासतेति पाठः ।

कार्यं हेतुः स्वभावो वा-
त एवोत्पत्तिमूलजः ॥ ४३ ॥ ११॥

अत एव कार्यं स्वभावो वा तदुत्पत्तिगर्भो योगिनिर्मितत्वाभावनिश्चयाभावे हेत्वाभासः । तन्निश्चये पुनरीश्वरनियत्यपेक्षया हेतुता स्यात् ॥ ४३ ॥

भूयस्तत्तत्प्रमात्रेक-
वह्न्याभासादितो भवेत् ।
परोक्षादप्यधिपते-
र्धूमाभासादि नूतनम् ॥ ४४ ॥ १२॥

कार्यमव्यभिचार्यस्य
लिङ्गमन्यप्रमातृगात् ।
तदाभासस्तदाभासा-
देव त्वधिपतेः परः ॥ ४५ ॥ १३॥

वह्न्याभासस्फुरणपूर्वकोऽपि जायमानो धूमाभासो दूरादौ नियतिशक्त्या कृतसामर्थ्याद्वह्न्याभासादेव तद्देशगततत्तत्प्रमात्रन्तरसाधारणात्तस्यैव सोऽव्यभिचारेण गमकः, जातरूढस्तु धूमाभासस्तद्वह्न्याभासस्यान्तरपरिच्छेयात् तत्तत्प्रमात्रन्तरगाद्धूमाभासादेव परोक्षादपि च तत्पूर्वकृताधिपत्यात् ॥ ४५ ॥

अस्मिन्सतीदमस्तीति
कार्यकारणतापि या ।
साप्यपेक्षाविहीनानां
जडानां नोपपद्यते ॥ ४६ ॥ १४ ॥

अस्मिन्सतीदं भवतीति नियतं पौर्वापर्यं कृत्तिकारोहिण्युदययोरकार्यकारणयोरप्यस्तीति पूर्वस्य सामर्थ्यं परस्य सत्तेति स्यात्, कार्यकारणभावस्तच्चापेक्षारहितानां जडानां न युक्तम्, एतावदेतत्स्यात् पूर्वस्य सामर्थ्यं परस्य सत्ता, न चैवं किंचिदुक्तं स्यात्, न च पूर्वस्य सामर्थ्यलक्षणः स्वभावः परसत्तारूपः ॥ ४६ ॥

न हि स्वात्मैकनिष्ठाना-
मनुसंधानवर्जिनाम् ।
सदसत्तापदेऽप्येष
सप्तम्यर्थः प्रकल्प्यते ॥ ४७ ॥ १५ ॥

सदसद्वा कार्यं कारणमप्यात्मपर्यवसितं जडमनुसंधानशून्यं नान्यापेक्षस्वभावं ततश्च नात्र प्रधानापेक्षामयो गुणविभक्त्यर्थो घटते ॥ ४७ ॥

अत एव विभक्त्यर्थः
प्रमात्रेकसमाश्रयः ।

क्रियाकारकभावाख्यो
युक्तो भावसमन्वयः ॥ ४८ ॥

एकप्रमातृसंलग्नस्तु क्रियाकारकभावाख्यो विभक्त्यर्थो भूमिबीजोदकादीनां समन्वयो युक्तो न तु शुष्कोऽन्यः कार्यकारणभावाख्यः ॥ ४८ ॥

परस्परस्वभावत्वे
कार्यकारणयोरपि ।
एकत्वमेव भेदे हि
नैवान्योन्यस्वभावता[1] ॥ ४९ ॥

कार्यकारणयोरन्योन्यरूपत्वेऽपि एकतैव स्यान्न तद्भावः ॥ ४९ ॥

एकात्मनो विभेदश्च
क्रिया कालक्रमानुगा ।
हेतोः स्यात्कर्तृतैवैवं
तथा परिणामस्तया ॥ ५० ॥

एकस्वभावस्य भेदेन स्थितिः परिणामः कालकलितः क्रियैव, ततः परिणामे स्वतन्त्रस्य शक्तिमतः कर्तृतैव हेतुता ॥ ५० ॥

---

[1] ग० ख० पु० स्वरूपतेति पाठः ।

न च युक्तं जडस्यैवं
भेदाभेदविरोधतः ।
आभासभेदादेकत्र
चिदात्मनि तु युज्यते ॥ ५१ ॥ १९ ॥

जडस्याभिन्नात्मनो भेदेनावस्थितेः विरोधादयुक्तं स्वच्छे चिदात्मन्येकस्मिन्नेवमनेकप्रतिबिम्बधारणेनाविरोधाद्युज्यते ॥ ५१ ॥

वास्तवेऽपि चिदेकत्वे
न स्यादाभासभिन्नयोः ।
चिकीर्षालक्षणैकत्व-
परामर्शं विना क्रिया ॥ ५२ ॥ २० ॥

एकस्मिंश्चित्तत्त्वेऽप्येकस्मादाभासभेदो न घटते, न च तत्र क्रियात्वं । यदा तु स चिदात्मा तथाचिकीर्षया परामृशन् बहिराभासयति तदा तदुपपद्यते; जडस्याप्यस्ति भवतीत्यस्यामपि सत्ताक्रियायां बुभूषायोगेन स्वातन्त्र्याभावादकर्तृकत्वं, तेन प्रमातैव तं भावयति-तेन तेन वा हिमाचलादिरूपेण स भवतीत्यत्र परमार्थः । ५२ ।

इत्थं तथा घटपटा-
द्याभासजगदात्मना ।

---

१ ग० पु० एकः सदेति पाठः ।

तिष्ठासोरेवमिच्छैव

हेतुता कर्तृता क्रिया ॥ ५३ ॥ २१॥

चिद्वपुषः स्वतन्त्रस्य विश्वात्मना कर्तुमिच्छैव जगत्प्रति कारणता कर्तृतारूपा सैव क्रियाशक्तिः । एवं चिद्रूपस्यैकस्य कर्तुरेव चिकीर्षाख्या क्रिया मुख्या, नाकर्तृकं कर्मास्ति कर्मादीनां कर्तृमुखेनोपचारात् ॥ ५३ ॥

इति प्रत्यभिज्ञावृत्तौ श्रीमदाचार्योत्पलदेवकृतायां

क्रियाधिकारो द्वितीयः ॥ २ ॥

अथ

# तृतीय आगमाधिकारः ।

अथ प्रथमो विमर्शः

एवमन्तर्बहिर्वृत्तिः
क्रिया कालक्रमानुगा ।
मातुरेव तदन्योन्या-
वियुक्ते ज्ञानकर्मणी ॥ १ ॥ १॥

प्रमातुरन्तःस्थितस्यात्मनो बहिष्कार एव क्रमानुगता क्रियेति परस्पराविरहिते तस्य ज्ञानक्रिये ॥ १ ॥

3 om. तस्य

किंत्वान्तरदशोद्रेका-
त्सादाख्यं तत्त्वमादितः ।
बहिर्भावपरत्वे तु
परतः पारमेश्वरम् ॥ २ ॥ २ ॥

ईशितुरन्तर्बहिःस्थितावन्तर्भावप्राधान्ये पुनः सादाख्यं तत्त्वम्, अपरं बहिर्भावोद्रेकादैश्वरम् ॥ २ ॥

ईश्वरो बहिरुन्मेषो
निमेषोऽन्तः सदाशिवः ।

**सामानाधिकरण्यं च**

**सद्विद्याहमिदंधियोः ॥ ३ ॥** ३॥

उन्मेषनिमेषौ बहिरन्तःस्थिती एवेश्वरसदाशिवौ बाह्याभ्यन्तरयोर्वेद्यवेदकयोरेकचिन्मात्रविश्रान्तेरभेदात्सामानाधिकरण्येनेदं विश्वमहमिति विश्वात्मनो मतिः शुद्धविद्या ॥ ३ ॥

**इदंभावोपपन्नानां**

**वेद्यभूमिमुपेयुषाम् ।**

**भावानां बोधसारत्वा-**

**द्यथावस्त्ववलोकनात् ॥ ४ ॥** ४॥

भिन्नवेद्यभूमाविदन्तया दृश्यतामापादितानां भावानां चिन्मात्रसारत्वादहमिदमिति तत्त्वप्रतिपत्तिः शुद्धताज्ञप्तिः ॥ ४ ॥

**अत्रापरत्वं भावाना-**

**मनात्मत्वेन भासनात् ।**

**परताहन्तयाच्छादा-**

**त्परापरदशा हि सा ॥ ५ ॥** ५॥

°न्तया म° अत्रेदन्तामतेरपरत्वमहन्तया सर्वस्य वेद्यस्याच्छादनात्परतेति परापरावस्थैषा ॥ ५ ॥

भेदधीरेव भावेषु

कर्तुर्बोधात्मनोऽपि या।

मायाशक्त्येव सा विद्ये-

त्यन्ये विद्येश्वरा यथा ॥ ६॥ ६"

बोधकर्तृतामयस्यापि भेदेन विश्वेक्षणं विद्येति केचित्। मायाशक्तिरप्येषा विद्यैव। संसारोत्तीर्णत्वात् तत्रस्था मन्त्रेश्वरविद्येश्वराः ॥ ६ ॥

तस्यैश्वर्यस्वभावस्य

पशुभावे प्रकाशिका।

विद्याशक्तिस्तिरोधान-

करी मायाभिधा पुनः ॥ ७॥ ७"

संसारिणामैश्वर्यस्य आत्मनः प्रत्यभिज्ञाने विद्या पशुभावे माया ॥ ७ ॥

भेदे त्वेकरसे भातेऽ-

हन्तयानात्मनीक्षिते।

शून्ये बुद्धौ शरीरे वा

मायाशक्तिर्विजृम्भते ॥ ८॥ ८"

यदा भावा भेदेनेदन्तयैव भासन्तेऽहमिति प्रमातृ-

त्वेन च देहादिः तदा विपर्ययद्वयहेतुर्मायाशक्तिर्विमोहिनी नाम विजृम्भा ॥ ८ ॥

यश्च प्रमाता शून्यादिः
प्रमेये व्यतिरेकिणि ।
माता स मेयः सन्कालादिकपञ्चकवेष्टितः ॥ ९ ॥

यश्च व्यतिरिक्ते प्रमेयजाते प्रमाता शून्यादिः स इदमिति वेद्य एव वस्तुतः कालाद्यैः पञ्चभिश्च परतन्त्रीकृतः । तत्र कालाद्वर्तमानाभासेन तस्य भूतभविष्यत्सम्भवः नियतेः कार्यकर्मफलनियमः, रागाद्भोगाभिष्वङ्गः, विद्याकलाभ्यामचिदात्मनोऽस्वतन्त्रस्यापीषज्ज्ञानक्रिये चित्स्वातन्त्र्यरूपे ॥ ९ ॥

त्रयोविंशतिधा मेयं
यत्कार्यकरणात्मकम् ।
तस्याविभागरूप्येकं
प्रधानं मूलकारणम् ॥ १० ॥

त्रयोदशविधा चाथ
बाह्यान्तःकरणावली ।
कार्यवर्गश्च दशधा
स्थूलसूक्ष्मत्वभेदतः ॥ ११ ॥

कार्याणि द्विधा, शब्दस्पर्शरूपरसगन्धाख्यानि सूक्ष्मत्वेन तन्मात्रसंज्ञानि पञ्च, अन्योन्यव्यूहसंबन्धेन स्थूलानि पृथिव्यादिसंज्ञानि तान्येव पञ्च । श्रोत्रत्वगक्षिजिह्वाघ्राणनासिका इति पञ्च बुद्धीन्द्रियाणि, वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि, मनोबुद्ध्यहङ्कारा इति त्रिधान्तःकरणमिति त्रयोविंशतिभेदस्य कार्यकरणात्मनः प्रमेयस्य मूलभूतैकाविभागदशा प्रधानाख्या ॥ ११ ॥

अथ द्वितीयो विमर्शः

तत्रैतन्मातृतामात्र-
स्थितौ रुद्रोऽधिदैवतम् ।
भिन्नप्रमेयप्रसरे
ब्रह्मविष्णू व्यवस्थितौ ॥ १२ ॥ १ ॥

शून्ये पुर्यष्टकाद्यर्थे सूक्ष्मदेह एव वा प्रमातृमात्रे स्थितौ अन्यप्रमेयोपसंहारे रुद्रोऽधिष्ठाता, भिन्नप्रमेयाभासे सर्गस्थितिहेतू ब्रह्मविष्णू ॥ १२ ॥

एष प्रमाता मायान्धः
संसारी कर्मबन्धनः ।
विद्याभिज्ञापितैश्वर्य-
श्चिद्घनो मुक्त उच्यते ॥ १३ ॥ २ ॥

मायीयशून्यादिप्रमाता नियतिनियमितः संसारी वि-

द्यावशादात्मतत्त्वाभिज्ञया मुक्तः ॥ १३ ॥

स्वाङ्गरूपेषु भावेषु
प्रमाता कथ्यते पतिः।
मायातो भेदिषु क्लेश-
कर्मादिकलुषः पशुः ॥ १४ ॥ ३॥

ऐश्वर्यदशायां प्रमाता विश्वं शरीरतया पश्यन् पतिः, पुंस्त्वावस्थायां तु रागादिक्लेशकर्मविपाकाशयैः परीतः पशुः ॥ १४ ॥

स्वातन्त्र्यहानिर्बोधस्य
स्वातन्त्र्यस्याप्यबोधता।
द्विधाणवं मलमिदं
स्वस्वरूपापहानितः ॥ १५ ॥ ४॥

स्वतन्त्रबोधः परमार्थस्तथारूपत्वादेव पूर्णस्तस्य स्वातन्त्र्यादेव तथेच्छया स्वातन्त्र्यं विना बोधमात्रनिर्माणे बोधतां विना स्वातन्त्र्यमात्रनिर्माणे वा पूर्णत्वाभावेन परिमितत्वाद्विधाणुत्वं तात्त्विकरूपविपर्यासान्मलत्वम् ॥ १५ ॥

भिन्नवेद्यप्रथात्रैव
मायाख्यं जन्मभोगदम्।

कर्तर्यबोधे कार्मं तु

मायाशक्त्यैव तत्त्रयम् ॥ १६ ॥

अत्रैव द्विधाणवे वेद्यमभिन्नमपि भेदेन यदाभाति तदातोऽपि विपर्यासनाम्ना मायीयमलम्, अहेतूनामपि कर्मणां जन्मादिहेतुभावेन विपर्यासादबोधात्मककर्तृगतं कार्मं, तन्मलत्रयनिर्माणे प्रभोरिच्छा मायाशक्तिरुच्यते ॥ १६ ॥

शुद्धबोधात्मकत्वेऽपि

येषां नोत्तमकर्तृता ।

निर्मिताः स्वात्मनो भिन्ना

भर्त्रा ते कर्तृतात्ययात् ॥ १७ ॥

वेद्यानुपरक्तबोधानामपि पूर्णकर्तृत्वशून्यात् स्वरूपादन्यत्वेन प्रभुणा निर्माणम् ॥ १७ ॥

बोधादिलक्षणैक्येऽपि

तेषामन्योन्यभिन्नता ।

तत्रेश्वरेच्छाभेदेन

ते च विज्ञानकेवलाः ॥ १८ ॥

शुद्धबोधानां बोधत्वनित्यत्वाद्यभेदेऽप्यन्योन्यभेदस्तथैवेश्वरेण निर्माणान्नान्यथा ते च सांख्यपुरुषप्राया वि-

१ ग० पु० तत्रेति पाठः ।

ज्ञानाकला उच्यन्ते ॥ १८ ॥

शून्याद्यबोधरूपास्तु
कर्तारः प्रलयाकलाः ।
तेषां कार्ममलोऽप्यस्ति
मायीयस्तु विकल्पितः ॥ १९ ॥

शून्ये प्राणादौ देहरूपतातिक्रमेणाहन्तया स्थिताः प्रलयकेवलिनः । तेषामणूनां कर्मसंस्कारोऽप्यस्ति, मायामलस्तु वेद्ययोगायोगाभ्यां विकल्पितः ॥ १९ ॥

बोधानामपि कर्तृत्व-
जुषां कार्ममलक्षतौ ।
भिन्नवेद्यजुषां माया-
मलं विद्येश्वराश्च ते ॥ २० ॥

कर्तृत्वयोगेऽपि बोधानां कार्मोत्तीर्णानां विद्येश्वराख्यानां भिन्नवेद्यभाक्त्वेन मायामलम् ॥ २० ॥

देवादीनां च सर्वेषां
भविनां त्रिविधं मलम् ।
तत्रापि कार्ममेवैकं
मुख्यं संसारकारणम् ॥ २१ ॥

---

* इतः प्रभृति वृत्तिर्नोपलभ्यते ।

कलोद्वलितमेतच्च
चित्तत्त्वं कर्तृतामयम् ।
अचिद्रूपस्य शून्यादे-
र्मितं गुणतया स्थितम् ॥ २२ ॥ ११ ॥

मुख्यत्वं कर्तृतायास्तु
बोधस्य च चिदात्मनः ।
शून्यादौ तद्गुणे ज्ञानं
तत्समावेशलक्षणम् ॥ २३ ॥ १२

शून्ये बुद्ध्याद्यभावात्म-
न्यहन्ताकर्तृतापदे ।
अस्फुटारूपसंस्कार-
मात्रिणि ज्ञेयशून्यता ॥ २४ ॥ १३ ॥

साक्षाणामान्तरी वृत्तिः
प्राणादिप्रेरिका मता ।
जीवनाख्याथ वा प्राणेऽ-
हन्ता पुर्यष्टकात्मिका ॥ २५ ॥ १४ ॥

तावन्मात्रस्थितौ प्रोक्तं
सौषुप्तं प्रलयोपमम् ।

सवेद्यमपवेद्यं च
मायामलयुतायुतम् ॥ २६ ॥ १५ ॥

मनोमात्रपथेऽप्यक्ष-
विषयत्वेन विभ्रमात्।
स्पष्टावभासा भावाना
सृष्टिः स्वप्नपदं मतम् ॥ २७ ॥ १६ ॥

सर्वाक्षगोचरत्वेन
या तु बाह्यतया स्थिरा।
सृष्टिः साधारणी सर्व-
प्रमातॄणां स जागरः ॥ २८ ॥ १७ ॥

ज्ञेया त्रयीयं प्राणादेः
प्राधान्यात्कर्तृतागुणे।
तद्धानोपचयप्राय-
सुखदुःखादियोगतः ॥ २९ ॥ १८ ॥

प्राणापानमयः प्राणः
प्रत्येकं सुप्तजाग्रतोः।
तच्छेदात्मा समानाख्यः
सौषुप्ते विषुवत्स्विव ॥ ३० ॥ १९ ॥

मध्योर्ध्वगोऽप्युदानाख्य-

स्तुर्यगो हुतभुङ्मयः ।

विज्ञानाकलमन्त्रेशो

व्यानो विश्वात्मकः परः ॥ ३१ ॥ २०॥

इति प्रत्यभिज्ञाकारिकावृत्तौ श्रीमदाचार्योत्पलदेवकृतायामा-
गमाधिकारस्तृतीयः ॥ ३ ॥

अथ

# चतुर्थस्तत्त्वार्थसंग्रहाधिकारः ।

स्वात्मैव सर्वजन्तूना-
मेक एव महेश्वरः ।
विश्वरूपोऽहमिदमि-
त्यखण्डामर्शबृंहितः ॥ १ ॥

तत्र स्वसृष्टेदंभागे
बुद्ध्यादिग्राहकात्मना ।
अहङ्कारपरामर्श-
पदं नीतमनेन तत् ॥ २ ॥

स्वस्वरूपापरिज्ञान-
मयोऽनेकः पुमान्मतः ।
तत्र सृष्टौ क्रियानन्दौ
भोगो दुःखसुखात्मकः ॥ ३ ॥

स्वाङ्गरूपेषु भावेषु
पत्युर्ज्ञानं क्रिया च या ।

मायातृतीये ते एव
पशोः सत्त्वं रजस्तमः ॥ ४ ॥

भेदस्थितेः शक्तिमतः
शक्तित्वं नापदिश्यते।
एषां गुणानां करण-
कार्यत्वपरिणामिनाम् ॥ ५ ॥

सत्तानन्दः क्रिया पत्यु-
स्तदभावोऽपि सा पशोः।
द्वयात्मा तद्रजो दुःखं
श्लेषि सत्त्वतमोमयम् ॥ ६ ॥

येऽप्यसामयिकेदन्ता-
परामर्शभुवः प्रभोः।
तेऽपि मिश्रा विभिन्नाश्च
तथा चित्रावभासिनः ॥ ७ ॥

ते तु भिन्नावभासार्थाः
प्रकल्प्याः प्रत्यगात्मनः।
तत्तद्विभिन्नसंज्ञाभिः
स्मृत्युत्प्रेक्षादिगोचरे ॥ ८ ॥

तस्यासाधारणी सृष्टि-
रीशसृष्ट्युपजीविनी ।
सैषाप्यज्ञतया सत्यै-
वेशशक्त्या तदात्मनः ॥ ९ ॥

स्वाविश्रान्त्युपरोधाय
चलया प्राणरूपया ।
विकल्पक्रियया तत्त-
द्वर्णवैचित्र्यरूपया ॥ १० ॥

साधारणोऽन्यथा चैष
सर्गः स्पष्टावभासनात् ।
विकल्पहानेनैकाग्र्यात्
क्रमेणेश्वरतापदम् ॥ ११ ॥

सोऽहं ममायं विभव
इत्येवं परिजानतः ।
विश्वात्मनो विकल्पानां
प्रसरेऽपि महेशता ॥ १२ ॥

मेयं साधारणं मुक्तः
स्वात्माभेदेन मन्यते ।

४।४



महेश्वरो यथा बद्धः
पुनरत्यन्तभेदवत् ॥ १३ ॥

सर्वथा त्वन्तरालीना-
नन्ततत्त्वौघनिर्भरः ।
शिवश्चिदानन्दघनः
परमाक्षरविग्रहः ॥ १४ ॥

एवमात्मानमेतस्य
सम्यग्ज्ञानक्रिये तथा ।
पश्यन्यथेप्सितानर्था-
ञ्जानाति च करोति च ॥ १५ ॥

अथ चतुर्थो विमर्शः

इति प्रकटितो मया
सुघट एष मार्गो नवो
महागुरुभिरुच्यते
स्म शिवदृष्टिशास्त्रे यथा ।
तदत्र निदधत्पदं
भुवनकर्तृतामात्मनो
विभाव्य शिवतामयी-
मनिशमाविशन्सिद्ध्यति ॥ १६ ॥ १ ॥

तैस्तैरप्युपयाचितैरुपनत-
स्तन्व्याः स्थितोऽप्यन्तिके
कान्तो लोकसमान एवमपरि-
ज्ञातो न रन्तुं यथा ।
लोकस्यैष तथानवेक्षितगुणः
स्वात्मापि विश्वेश्वरो
नैवालं निजवैभवाय तदियं
तत्प्रत्यभिज्ञोदिता ॥ १७ ॥

जनस्यायत्नसिद्ध्यर्थ-
मुदयाकरसूनुना ।
ईश्वरप्रत्यभिज्ञेय-
मुत्पलेनोपपादिता ॥ १८ ॥

इति श्रीमदुदयाकरसूनुना श्रीमन्महामाहेश्वराचार्यवर्योत्पलदेवेन कृतायां प्रत्यभिज्ञाकारिकावृत्तौ तत्त्वार्थसंग्रहाधिकारश्चतुर्थः ॥ ४ ॥

समाप्तेयं श्रीप्रत्यभिज्ञाकारिकावृत्तिः ॥

श्रीमत्प्रतापभूभर्तुराज्ञया प्रीतये सताम् ।
मधुसूदनकौलेन संपाद्येयं प्रकाशिता ॥

